5.2

॥ श्रीः ॥

हरजीवनदास संस्कृत ग्रन्थमाला २४

# स्वप्नवासवदत्तरहस्यम्

## ( प्रश्नोत्तरी : गाईड )

लेखक—
अशोक चन्द्र गौड़ शास्त्री




चौखम्बा अमरभारती प्रकाशन
पोस्ट बाक्स संख्या ११३८
वाराणसी—२२१००१ ( भारत )

॥ श्रीः ॥

हरजीवनदास संस्कृत ग्रन्थमाला २४

# स्वप्नवासवदत्तरहस्यम्

## ( स्वप्नवासवदत्तप्रश्नोत्तरी )

## परीक्षोपयोगिनिबन्धसहितम्

लेखक :

**अशोकचन्द्रगौड़शास्त्री**

व्याकरणाचार्य, डिप्० इन रशियन

रिसर्चएसोशिएट

व्याकरणविभाग, वेदवेदाङ्गसङ्काय

सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी




**चौखम्बा अमरभारती प्रकाशन**

भारतीय सांस्कृतिक साहित्य के प्रकाशक एवं विक्रेता

पोस्ट बाक्स संख्या ११३८

के. ३७/१३०, गोपाल मन्दिर लेन

वाराणसी—२२१००१ ( भारत )

# निवेदनम्

'स्वप्नवासवदत्त' नाटकमिदं सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्योत्तरमध्यमा-द्वितीयवर्षीयाऽनिवार्यसंस्कृतकाव्यस्य पाठ्यक्रमे निर्धारितमस्ति ।

अद्य यद्यपि 'स्वप्नवासवदत्त' नाटकस्याऽनेकाष्टीकाः व्याख्याश्च वर्तन्ते, परन्तु ताष्टीकाः केवलं विद्वज्जनचित्ताकर्षकत्वात् छात्राणां कृतेऽतीव दुर्गमाः इति कृत्वा छात्रा इतस्ततोऽटाट्यमानाश्चिन्तयन्तोऽवलोक्यन्ते यत् कथं परीक्षोत्तीर्णता स्यादिति ।

'स्वप्नवासवदत्त'नाटकमधीयानानां छात्राणां परीक्षोत्तरणकाठिन्यं चिरकाला-देव मम हृदयमान्दोलयति स्म । अतस्तेषामेवाल्पमेधसां छात्राणां कल्याणाय ममाऽयं लघुतमः प्रयासः ।

उत्तरमध्यमाद्वितीयवर्षीयाऽनिवार्यसंस्कृतकाव्यस्य पाठ्यक्रमे उक्तपाठ्यग्रन्था-तिरिक्तं संस्कृतेऽनुवादः, गुप्ताशुद्धिप्रदर्शनम्, संस्कृतनिबन्धाश्चैते निर्धारितास्सन्ति । तत्र छात्राणां काठिन्यं सम्यग् विचार्य मया 'स्वप्नवासवदत्तरहस्यम्' इति नामधेयो ग्रन्थः पाठकानां समक्षमुपस्थाप्यते ।

## ग्रन्थवैशिष्ट्यम्

ग्रन्थस्याऽस्य विषयवैशिष्ट्यं विचार्य ग्रन्थेऽस्मिन् पञ्च खण्डानि निर्धारितानि—समीक्षात्मकप्रश्नोत्तरखण्डम्, श्लोकव्याख्यात्मकप्रश्नोत्तरखण्डम्, गद्यांशव्याख्यात्मक-प्रश्नोत्तरखण्डम्, निबन्धखण्डम्, प्रश्नपत्रागतप्रश्नोत्तरखण्डञ्चेति भेदात् ।

१. समीक्षात्मकप्रश्नोत्तरखण्डम्—अस्मिन् खण्डे सम्भाव्यसमीक्षात्मक-प्रश्नानां—ग्रन्थकारपरिचय–तद्ग्रन्थपरिचय पारिभाषिकशब्दव्याख्या–पात्रचरित्र-चित्रण–संक्षिप्तकथाप्रभृतिविषयकाणां प्रश्नानामुत्तराणि प्रदर्शितानि ।

२. श्लोकव्याख्यात्मकप्रश्नोत्तरखण्डम्—अस्मिन् खण्डे पाठ्यग्रन्थस्य 'स्वप्नवासवदत्त' नाटकस्य श्लोकानां सन्दर्भप्रसङ्गनिर्देशान्वयसमासविग्रहकोशपुर-स्सरं व्याख्या विहिताऽस्ति ।

३. गद्यांशव्याख्यात्मकप्रश्नोत्तरखण्डम्—अस्मिन् खण्डे पाठ्यग्रन्थस्य 'स्वप्नवासवदत्त' नाटकस्य प्रमुखानां गद्यांशानां सन्दर्भप्रसङ्गनिर्देशयुता भावार्थाः प्रकाशिताः ।

४. निबन्धखण्डम्—अस्मिन् खण्डे परीक्षायां प्रष्टव्याः षड्विंशतिमिताः संस्कृतनिबन्धाः निबद्धास्सन्ति ।

५. प्रश्नपत्रागतप्रश्नोत्तरखण्डम्—अस्मिन् खण्डे प्राचीनानि प्रश्नपत्राणि तदुत्तराणि च प्रस्तुतानि ।

अत्र ग्रन्थे छात्राणां सौविध्याय विषयानुक्रमणिकया सह श्लोकानामनुक्रमणिका च प्रदर्शिता । सर्वप्रकारेण छात्रहितं विचार्यैवाऽस्य ग्रन्थस्य रचना विहिताऽस्माभिः । आशासे यदनेन छात्राणां परीक्षाम्बुधितरणाभियाने साफल्यं भविष्यति ।

## कृतज्ञताप्रकाशः

अतः परं सर्वप्रथमं परमपितरं परमेश्वरं, पितरौ, गुरुंश्च श्रद्धया प्रणम्यते, येषां कृपया ग्रन्थोऽयं निर्विघ्नं पूर्तिमगात् । ततश्चाऽस्य ग्रन्थस्य निर्माणाय प्रेरणार्थं श्रीवल्लभदासशाहमहोदयाय शीघ्रम्प्रकाशनार्थञ्च चौखम्बाअमरभारतीप्रकाशनाभिधेयप्रकाशकव्यवस्थापकाय श्रीसुन्दरदासजीगुप्तमहोदयाय, तत्कार्यकर्तृभ्यः, मुद्रकाय च हार्दिकाः धन्यवादाः प्रदीयन्ते । ततश्च नानाविधप्रत्यवमर्शप्रदानार्थं माननीयान् श्रीपण्डितरामचन्द्रझामहाभागान् प्रति हार्दिकी कृतज्ञता प्रकाश्यते । सममेव नानाविधसहयोगप्रदानार्थं मम धर्मपत्नी श्रीमतीवीणा ( वीना ) देवी विशेषतो धन्यवादार्हा । अन्ते च सर्वे च मे भ्रातरो, भगिन्यः, शुभेच्छवश्च सर्वथा धन्यवादार्हाः ।

श्रीकृष्णजन्माष्टमी
वि० सं० २०४१
स्वामिविवेकानन्दनगरम्, वाराणसी
सी० २७/२११ एल० १/?
२० अगस्त सन् १९८४ ई०

विदुषां वशम्वदः
अशोकचन्द्रगौड़शास्त्री

# विषयानुक्रमणिका

# श्लोकानुक्रमणिका

पाठ्यक्रमः

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी

### उत्तरमध्यमाद्वितीयखण्डम्

अनिवार्यविषयः संस्कृतकाव्यम्

नाटकनिबन्धव्युत्पत्त्यनुवादानाम् पूर्णाङ्काः ५०

(क) स्वप्नवासवदत्तनाटकम् २०

(ख) अशुद्धवाक्यानां शोधनम् ५

(ग) अनुवादः—हिन्दीभाषातः संस्कृते १५

(घ) निबन्धः—संस्कृतभाषायाम् १०

॥ श्रीः ॥

# स्वप्नवासवदत्तरहस्यम्

## समीक्षात्मकप्रश्नोत्तरखण्डम्



### महाकविर्भासः

**प्रश्नः**—ग्रन्थकर्तुर्महाकवेर्भासस्य कः परिचयः ? इति सम्यग् व्याख्यायताम् । (सन् १९६९, १९७८, १९७७ ई० )

**उत्तरम्**—सूरिधन्येन नाटककारमूर्द्धन्येन कविताकामिनीहासेन महाकविभासेन संस्कृतवाङ्मयभाण्डागारो लालित्यपूर्णैस्सफलनाटकैः सुसम्पन्नः । मानवीयभावनानां यादृशं सफलं चित्रणमस्माभिर्भासस्य नाटकेषु लब्धुं शक्यते तादृशमन्यत्र दुर्लभमस्ति ।

साहित्यजगति महाकविभासस्य पुनः प्रतिष्ठापनश्रेयांसि महामहोपाध्यायश्रीपण्डितगणपतिदेवशास्त्रिमहोदयानां सन्ति । एतैः सन् १९१२ ईशवीये अनन्तशयनग्रन्थमालात्रिवेन्द्रमिति संस्थातः भासस्य स्वप्नवासवदत्तादित्रयोदशनाटकानां प्रामाणिकं प्रकाशनं विहितम् ।

प्राचीनमहाकवीनां तुल्यमेव भासेनाऽपि स्वरचनासु स्ववृत्तविषये किमपि न चर्चितम् । यथा कविकुलगुरोः कालिदासस्य विषयेऽनेकेषां पाश्चात्यपौरस्त्यविदुषां परस्परं मतवैपरीत्यं वर्तते, तथैव भासस्य विषयेऽप्यस्तीति । भासस्य कालनिर्णये प्रचलितानि विभिन्नानि मतानि त्रिधा विभक्तुं शक्यन्ते । तथाहि—

**प्रथममतम्** ( चतुर्थपञ्चमशताब्दी ई० पू० )—महामहोपाध्यायपण्डितगणपतिदेवशास्त्रि-दीक्षितारप्रभृतीनां विदुषां मतानुसारेण महाकविर्भासः पाणिनिकौटिल्याभ्यामप्यतिप्राचीन इति निश्चीयते । कौटिल्येन रणस्थले शूराणामुत्साहवर्द्धनार्थं ये श्लोका उद्धृताः, तेष्वेकः प्रतिज्ञायौगन्धरायणनाटकेऽप्युपलभ्यते ।

महाकविना नागवनरेणुवनराजगृहपाटलिपुत्रादीनां यद्वर्णनं विहितम्, तेषां बुद्धसमय एव प्रसिद्धिर्जातेति कृत्वा बुद्धानन्तरमेव भासस्य समयः । एतस्य नाटकेषु यस्य समाजस्य चित्रणमस्ति तदनेकैः प्रमाणैर्भासमेकस्मिन् निश्चितसमये स्थितं साधयति । श्रीमता ए० डी० पुशलकरमहोदयेन सामाजिकस्थितेर्विस्तृतविवेचनानन्तरम्भासस्य समयः ईशवीयपूर्वं पञ्चमम् चतुर्थं वा शतकमिति निश्चीयते ।

**द्वितीयमतम्** ( द्वितीयतृतीयशताब्दी )—डॉ० कीथमहोदयानुसारेण भासस्यान्तिमा तिथिसीमा पञ्चाशदुत्तरत्रिशतमिति भवितुमर्हति। यतो हि कालिदासेनैतदनन्तरं चतुर्थशताब्द्यामस्य यशो वर्णितम्। भासो महाभारतात् श्रीकृष्णाद्वा सम्बद्धानां कथावस्तूनां निर्माणे यथा सफलस्तल्लीनश्च न तथाऽन्यत्र। श्रीस्टेनकोनोमहोदयस्य मतानुसारेण भासस्य समयः ईसायाः द्वितीयशतकमिति निश्चीयते।

**तृतीयमतम्** ( सप्तमशताब्दी )—भासस्य नाटकानां समयः सप्तमेशवीयशतकमिति मन्यमानानां विदुषां डॉ० वार्नेटमहोदयः प्रामुख्यम्भजमानो वर्तते। डॉ० वार्नेटमहोदयेनेदं साधयितुं प्रयतितम् यद् भासनाटकचक्रस्य कर्ता ( प्रणेता ) भासो नाऽस्ति, अपितु, ईसायाः सप्तमशताब्द्यां वर्तमानः कश्चन केरलीयः कविरासीदिति।

**सिद्धान्तमतम्**—यथा कालिदासशूद्रककौटिल्यानां समयोऽसन्दिग्धस्तथैव भासोऽश्वघोषात् पूर्ववर्ती उत्तरवर्ती वेति विवाद एवाऽस्ति। भासः सर्वप्रकारेण मौर्यकालात् पूर्ववर्तीति कृत्वा महाकवेर्भासस्य समयः ईशवीयपूर्वचतुर्थशतकमिति निश्चीयतेऽस्माभिः।

## भासविरचितग्रन्थाः

**प्रश्नः—महाकविभासविरचितग्रन्थानां नामानि संक्षेपेण तद्विवरणं च लिख।**

**उत्तरम्**—महाकविभासेन प्रणीतानि अनेकानि नाटकान्यासन्निति प्राचीनोल्लेखैर्ज्ञायते, तेष्वधोलिखितानि त्रयोदश नाटकानि प्रसिद्धानि—

१. प्रतिज्ञायौगन्धरायणम्।
२. अविमारकम्।
३. स्वप्नवासवदत्तम्।
४. प्रतिमानाटकम्।
५. अभिषेकनाटकम्।
६. मध्यमव्यायोगः।
७. पञ्चरात्रम्।
८. दूतवाक्यम्।
९. दूतघटोत्कचम्।
१०. कर्णभारम्।
११. उरुभङ्गम्।
१२. बालचरितम्।
१३. दरिद्रचारुदत्तम्।

**१. प्रतिज्ञायौगन्धरायणम्**—इत्यभिधेये नाटके वत्सराजेनोदयनेन उज्जयिन्याः राज्ञः प्रद्योतस्य कन्यायाः वासवदत्तायाः हरणस्य वृत्तान्तोऽस्ति। प्रद्योतद्वारा उदयने वन्दीकृते सति उदयनस्य मंत्री यौगन्धरायण उदयनं मोचयितुं वासवदत्तया सह तस्य विवाहं कारयितुञ्च प्रतिजानीते। यौगन्धरायणश्च स्वकार्ये साफल्यं लभते। एतत्प्रतिज्ञाकारणेनैवास्य नाटकस्य 'प्रतिज्ञायौगन्धरायणम्' इति नाम संवृत्तम्।

**२. अविमारकम्**—इत्यभिधेयनाटकस्य कथा सम्भवतो गुणाढ्यकृतबृहत्कथातो गृहीता। अत्र ग्रन्थे राजकुमारस्याऽविमारकस्य कुन्तिभोजकुमार्या कुरङ्ग्या सह प्रणयो वर्णितः।

**३. स्वप्नवासवदत्तम्**—इत्यभिधेयनाटके राज्ञ उदयनस्य वासवदत्तया सह स्वप्ने मेलो जायते, अत एवाऽस्य नाटकस्य 'स्वप्नवासवदत्तम्' इति नाम संवृत्तम्। उज्जयिनीरेशस्य प्रद्योतस्य राजप्रासादात् वासवदत्ताहरणानन्तरं राजा उदयनः कामक्रीडायां निमग्नो भववि, राज्यकार्यञ्च नावधत्ते। अतस्तत्शत्रुरारुणिराक्रन्तुमवसरो लभते। परन्तु मन्त्री यौगन्धरायणो दत्तावधानस्तिष्ठति। स आरुणिं पराजेतुं मगधराजस्य दर्शकस्य साहाय्यं वाञ्छति। सः पद्मावत्या मगधराजभगिन्या सहोदयनस्य विवाहं कारयित्वा राजशक्तिं वर्द्धयितुमैच्छत्। ध्रियमाणायां च वासवदत्तायां न सम्भवतीदमिति वासवदत्तासम्मत्या कदाचिदुदयने मृगयार्थं गते लावाणके, अग्नौ वासवदत्ता दग्धेति प्रचार्यते यौगन्धरायणेन, वासवदत्तां च नीत्वा सः मगधराजदर्शकस्य पुत्र्याः पद्मावत्या अन्तिके न्यासरूपेण परित्यक्तवान्। तत उदयनस्य पद्मावत्या सह विवाहो भवति। एकस्मिन् दिने उदयनः स्वप्ने वासवदत्तां पश्यति, तस्य च मनसि वासवदत्तायाः पुनः स्मरणं जायते। यथासमयं वासवदत्ता प्रकटीभवति, उदयनस्य तया सह मेलो भवति। उदयनस्य सेनापतिः रुमण्वान् च आरुणिं रणे पराजितं करोति। एवमस्य नाटकस्य सुखमयमन्तं जायते।

**४. प्रतिमानाटकम्**—अत्र रामायणस्य कथा वर्तते। नाटकेऽस्मिन् रामस्य वनगमनात्रावणवधपर्यन्तस्य कथा वर्तते। मृते राजनि दशरथे वंशस्य देवकुले तस्य प्रतिमा स्थाप्यते। मातुलगृहात् प्रत्यावर्तिते सति भरतो नगराद् बहिःदेवकुले

दशरथस्य प्रतिमां पश्यति । अनेन सः तस्य मृत्योः समाचारेणावगतो भवति । प्रतिमानाभाधारेणैवाऽस्य नाटकस्य 'प्रतिमानाटकम्' इति नाम संवृत्तम् ।

५. अभिषेकनाटकम्–अस्मिन् भगवतः श्रीरामचन्द्रस्य किष्किन्धागमनादारभ्य रावणवधानन्तरम् भगवतः श्रीरामचन्द्रस्य राज्याभिषेकपर्यन्तस्य कथा वर्तते । श्रीरामराज्याभिषेकवृत्तकारणेनैवाऽस्य नाटकस्य 'अभिषेकनाटकम्' इति नाम संवृत्तम् ।

६. मध्यमव्यायोगः–इत्यभिधेये नाटके पाण्डवानां वनवासकाले भीमद्वारा घटोत्कचसकाशादेकस्य ब्राह्मणबालकस्य मुक्तेः कथा वर्तते । अत्र हिडिम्बानामकराक्षस्या सह भीमस्य प्रणयः घटोत्कचनामकपुत्रद्वारा चिरविरहितयोस्तयोः सङ्गश्च वर्णितः ।

७. पञ्चरात्रम्–इति नाटके कल्पिता कथा वर्तते । द्रोणाचार्येण कौरवाणां यज्ञे आचार्यत्वं कृतम्, दक्षिणायां सः पाण्डवानां राज्यं याचितवान् । पञ्चदिनाभ्यन्तरेऽन्वेषणे क्रियमाणे लभ्यं तदिति दुर्योधनस्याश्वासने द्रोणेन तथा विहितम् ।

८. दूतवाक्यम्–इत्यभिधेये नाटके दूतभूतस्य भगवतः श्रीकृष्णस्य सदाशयतया सदैव दुर्योधनस्याभिमानित्वं वर्णितम् । दुर्योधनः स्वमंत्रिपरिषदि स्वसहयोगिभिः सह सम्यग् विचारपूर्वकं भीष्मं सम्भाव्यसंग्रामार्थं कौरवाणां सेनापतिपदे नियोजयति । अत्रान्तरे सहसा पाण्डवपक्षात् दूतरूपेण श्रीकृष्णः समागच्छति । वृत्तमिदमवगत्य दुर्योधनः स्वसहयोगिनः श्रीकृष्णस्वागतकरणान्निषेधयति । स्वयञ्च सः श्रीकृष्णस्यापमानं कर्तुं यतते । श्रीकृष्णः प्रविशति, सर्वे च सभासदः सहसा उत्तिष्ठन्ति । दुर्योधनोऽपि व्यथितः सन् पतति । कृष्णोऽर्धराज्यं पाण्डवेभ्यो याचते । दुर्योधनः पाण्डवान् निन्दति । ततः श्रीकृष्णं ग्रहीतुं सर्वैःसभासद्भिर्निषेधेकृते, दुर्योधनः स्वयमग्रे सरति । श्रीकृष्णो विराजं रूपं गृह्णाति, दुर्योधनश्च किंकर्तव्यविमूढो जायते । अन्ते च धृतराष्ट्रः श्रीकृष्णस्य भगवतः पादयोः पतति ।

९. दूतघटोत्कचम्–इत्यभिधेये नाटके हिडिम्बाभीमयोरात्मजः घटोत्कचः अभिमन्युमृत्योरनन्तरम् दूतरूपेण श्रीकृष्णस्य सन्देशं कौरवेभ्यो निवेदयति । वृत्तमिदं महाभारते नोपलभ्यते । नाटकस्याऽस्यान्ते भरतवाक्यं नास्ति ।

१०. कर्णभारम्–इत्यभिधेये नाटके कर्णस्योदात्तं चरित्रं चित्रितमस्ति । द्रोणाचार्यस्य मृत्योरनन्तरं कर्णः कौरवाणां सेनापतिपदे नियोज्यते । युद्धस्य सम्पूर्णोऽपि भारः

कर्णेन वोढव्य इति कृत्वाऽस्य नाटकस्य 'कर्णभारम्' इति नाम संवृत्तम्। कर्णो रथमारुह्य सारथिना शल्येन सह रणाङ्गणे गच्छति। मार्गे इन्द्रो ब्राह्मणरूपं धारयित्वा आगच्छति अभेद्यं कवचं च याचते। पूर्वं तु कर्णः कवचं परित्यज्यान्यत् सर्ववस्तु दातुं स्वीकरोति; किन्तु ब्राह्मणस्य हठवशात् सः कवचं ददाति, विमला-नामधेयां शक्तिं च लभते। तदनन्तरं सः रणाङ्गणम्प्रस्थितो भवति।

११. उरुभङ्गम्—इत्यभिधेये नाटके वर्णितम् यद् भीमेन प्रियापरिभवप्रतप्तेन दुर्योधनस्य जङ्घे भग्ने। संस्कृतसाहित्ये शोकान्तनाटकस्येदमेकं निदर्शनम्।

१२. बालचरितम्—इत्यभिधेये नाटके श्रीमद्भागवताधारेण भगवतः श्रीकृष्णस्य बाललीला वर्णिता।

१३. दरिद्रचारुदत्तम्—इत्यभिधेये नाटके वसन्तसेनाचारुदत्तयोः प्रणयकथा वर्णिता। अस्य चत्वार एवाङ्का उपलभ्यन्ते।

शैली—शैल्याः सर्ववैशिष्ट्यविशिष्टस्य महाकवेर्भासस्याऽभिव्यञ्जनाऽतिप्रभावो-त्पादिका अस्ति। ओजः प्रसादाभ्यां सह माधुर्यस्य संयोजना सहृदयान् मुग्धीकरोति। सम्पूर्णेऽपि भासनाटके पठिते सति कुत्रचिदपि दुरूहकल्पना समासबाहुल्यं प्रवाहेऽव-रोधश्च नोपलभ्यते।

भासस्य नाटकेषु पारिवारिकसामाजिकसम्बन्धानामाधाराणाञ्चाऽऽदर्श उपस्थापितः।

## नाटकीयप्रमुखतत्त्वानां ( पारिभाषिकपदानां ) व्याख्याः

प्रश्नः—अधोलिखितपदानां व्याख्या कार्या—

नान्दी ( सन् १९७८, १९७९ ), स्थापना ( सन् १९७७, १९७८-७९ ), विष्कम्भकः ( सन् १९७८ ), प्रवेशकः ( सन् १९७९ ), भरतवाक्यम् ( सन् १९७९ ), सूत्रधारः ( १९ ७ ), नेपथ्यम् ( १९७७ ), कञ्चुकी ( सन् १९७७ ), विदूषकः ( सन् १९७७ )।

उत्तरम्—

१. नान्दी ( सन् १९७८–१९७९ )—

लोके मङ्गलमेव नाटके नान्दीत्युच्यते। तल्लक्षणं यथा—

'आशीर्वचनसंयुक्ता स्तुतिर्यस्मात् प्रयुज्यते ।
देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता ॥'

अर्थात्—आशीर्वचनेन संयुक्ता देवानां, द्विजस्य, नृपस्य वा कस्यचिदपि स्तुतिरेव 'नान्दी' इत्युच्यते ।

## २. स्थापना ( सन् १९७७–७८–७९ )

यदन्यैः प्रस्तावनेत्युच्यते तदेव महाकविना भासेन 'स्थापने'ति नाम्ना व्यवहृतम् । आमुखमप्येतस्या एव नामान्तरम् । प्रस्तावनालक्षणम्, यथा—

'नटी विदूषको वापि पारिपार्श्विक एव वा ।
सूत्रधारेण सहितः संलापं यत्र कुर्वते ॥
चित्रैर्वाक्यैः स्वकार्योत्थैः प्रस्तुताक्षेपिभिर्मिथः ।
आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनाऽपि सा ॥'

अन्यत्र च प्रस्तावनारूपमित्थमुपवर्णितम्—

'विधेर्यथैव सङ्कल्पो मुखतां प्रतिपद्यते ।
प्रधानस्य प्रबन्धस्य तथा प्रस्तावना मता ॥'

पञ्चविधासु प्रस्तावनाभिधासु प्रवर्तकाभिधा प्रस्तावना 'स्वप्नवासवदत्त' नाटके वर्तते । तथा च तल्लक्षणमपि साहित्यदर्पणे—

'कालं प्रवृत्तमाश्रित्य सूत्रधृग् यत्र वर्णयेत् ।
तदाश्रयश्च पात्रस्य प्रवेशस्तत्प्रवर्तकम् ॥'

## ३. विष्कम्भकः ( सन् १९७८ )

विष्कम्भको वृत्तस्य वर्तिष्यमाणस्य वा कथांशस्य सूचकः, अङ्कस्यादौ प्रदर्शनीयो भवति । मध्यमपात्रप्रयुक्तो विष्कम्भकः शुद्धः, नीचमध्यमकल्पितस्तु सङ्कीर्ण इति द्विविधः । तल्लक्षणं यथा—

'वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः ।
संक्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शितः ॥
मध्येन मध्यमाभ्यां वा पात्राभ्यां सम्प्रयोजितः ।
शुद्धः स्यात् स तु सङ्कीर्णो नीचमध्यमकल्पितः ॥'

**४. प्रवेशकः ( सन् १९७९ )**

नीचैः पात्रैः वृत्तवर्तिष्यमाणकथांशसूचकः प्रवेशक इति कथ्यते। तथा च तत्स्वरूपमुपवर्णितं विश्वनाथेन—

'प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजितः।
अङ्कद्वयान्तर्विज्ञेयः शेषं विष्कम्भके यथा ॥'

**५. भरतवाक्यम् ( सन् १९७९ )**

नाटकस्य परिसमाप्तौ सामाजिकेभ्यो नटेनाऽऽशीर्वादः प्रदीयते। एतदेव भरतवाक्यनाम्ना व्यपदिश्यते। तल्लक्षणं यथा—

'वरदानसम्प्राप्तिः काव्यसंहार इष्यते।
नृपदेशादिशान्तिस्तु प्रशस्तिरभिधीयते ॥'

**६. सूत्रधारः ( सन् १९७७ )**

सूत्रधारस्तु नाटकीयपदार्थानुष्ठानसंविधानकादिकार्यकुशलः। सूत्रं नाटकबीजं तद् धारयति वहति उपन्यस्यतीत्यर्थः। तथा चोक्तम् तल्लक्षणम् केनचित्—

'नाट्यस्य यदनुष्ठानं तत् सूत्रं स्यात् सबीजकम्।
रङ्गदेवतपूजाकृत् सूत्रधार इहोदितः ॥'

**७. नेपथ्यम् ( सन् १९७७ )**

नेपथ्यं च नाटकीयपात्राणां तत्तद्वेषभूमिकाग्रहणसाधनं स्थानम्।

**८. कञ्चुकी ( सन् १९७७ )**

राज्ञो भृत्यविशेषः काञ्चुकीयश्च—'ये नित्यं सत्यसम्पन्नाः कामदोषविवर्जिताः। ज्ञानविज्ञानकुशलाः काञ्चुकीयास्तु ते मताः ॥' इत्युक्तलक्षणलक्षितः 'कञ्चुकी'ति प्रसिद्धः। एष च राज्ञः सन्निधावन्तःपुरे वर्तमानो वेत्रधरः प्रायो यत्र तत्र नाटकेषु वृद्ध एवोपवर्ण्यते।

**९. विदूषकः ( सन् १९७७ )**

विदूषको हि विचित्रवाग् वसन्तादिपदव्यपदेश्यो हास्यरसप्रधानः पात्रविशेषः। अयं च भोजनप्रियो ब्राह्मणो राज्ञः सुहृत्त्वेनैव सर्वत्र नाटकेषूपवर्ण्यते। तल्लक्षणं यथा साहित्यदर्पणे—

'कुसुमवसन्ताद्यभिधः कर्मवपुर्वेषभाषाद्यैः ।
हास्यकरः कलहरतिर्विदूषकः स्यात् स्वकर्मज्ञः ॥'

स्वप्नवासवदत्तनाटके विदूषकः 'वसन्तकः' इति नामाभिधेयोऽस्ति ।

## पात्रपरिचयः

प्रश्नः—स्वप्नवासवदत्तनाटकीयपात्राणां परिचयो देयः ।

उत्तरम्—

पुरुषाः—१. सूत्रधारः ··· नाटकबीजधारणकर्ता
२. उदयनः ··· वत्सदेशस्याधिपतिः
३. दर्शकः ··· मगधदेशस्याधिपतिः
४. प्रद्योतमहासेनः ··· उज्जयिनीनरेशः
५. यौगन्धरायणः ··· प्रधानमन्त्री
६. रुमण्वान् ··· मन्त्री
७. ब्रह्मचारी ··· लावाणकग्रामस्य वेदपठनार्थी
८. वसन्तकः ··· विदूषकः
९. काञ्चुकीयः ··· कञ्चुकी
१०. सम्भषकः ··· भटः

स्त्रियः—१. वासवदत्ता (आवन्तिका) ··· प्रद्योतमहासेनस्य पुत्री, उदयनस्य प्रथमा पत्नी
२. पद्मावती ··· राज्ञो दर्शकस्य भगिनी उदयनस्याऽपरा पत्नी
३. महादेवी ( तापसी ) ··· राज्ञो दर्शकस्य माता
४. धात्री ··· पद्मावत्याः धात्री ('धाय'इति ख्याता)
५. धात्री ··· वासवदत्तायाः धात्री
६. कुञ्जरिका ··· चेटी
७. पद्मिनिका ··· चेटी
८. मधुकरिका ··· चेटी
९. विजया ··· प्रतीहारी

## स्वप्नवासवदत्तनाटकीयपात्राणां चरित्रचित्रणम्

**प्रश्नः—अधोलिखितेष्वेकस्य चरित्रचित्रणं विधीयताम्—**

[१] उदयनः (सन् १९६९), [२] यौगन्धरायणः (सन् १९६७-६९),
[३] वासवदत्ता (सन् १९६८–७०), [४] पद्मावती।

**उत्तरम्—**

[ १ ] **उदयनः**—'स्वप्नवासवदत्त' नाटकस्य नायकः उदयनः कलाप्रियो, विलासी, रूपवांश्चाऽस्ति। अयमस्ति वत्सदेशस्य भूपालः। राज्ञोऽस्य रूपं सर्वेऽपि समानरूपेण प्रशंसन्ति। नाटकस्याऽस्य द्वितीयेऽङ्के वासवदत्ताऽप्येनं प्रशंसति—

'नहि नहि दर्शनीय एवेति।'

तृतीयाङ्के च चेटी एनं शरचापहीनं कामदेवम्मन्यते। यथा—

'शक्यम्भणितुं शरचापहीनं कामदेव इति।'

उदयनस्य वीणावादनस्य प्रसिद्धिस्सर्वत्र व्याप्ताऽस्ति। अयं राजा मृगया-प्रियोऽप्यस्ति। तथ्यमिदं प्रथमाङ्के ब्रह्मचार्युक्त्या स्फुटीभवति। यथा—

'ततस्तस्मिन् मृगयानिष्क्रान्ते राजनि ग्रामदाहेन सा दग्धेति।'

सः दाक्षिण्यगुणेन युक्तोऽस्ति। वासवदत्तायास्सः सदैव स्मरणं करोति। पद्मावतीपरिणयानन्तरञ्च विदूषकेन 'वासवदत्तापद्मवत्योर्मध्ये का भवतः प्रियेति' पृष्टे सति राजा उत्तरयति—

पद्मावती बहुमता यद्यपि रूपशीलमाधुर्यैः।
वासवदत्ताबद्धं न तावन्मे मनो हरति॥

अनेनैव दाक्षिण्यगुणकारणेन सः पद्मावत्यास्सकाशे वासवदत्ताम्प्रति स्वकीयाम्प्रीतिं न प्रकटयति।

अस्मिन् राजनि विवेकस्य काचिन्न्यूनता प्रतीयते। अत एवाऽन्तिमेऽङ्के यौगन्धरायणेन कृतविरोधेऽपि वासवदत्तां राजगृहे प्रवेष्टुं कथयति। यद्यपि सः तस्याः परिचयं कर्तुं पूर्णरूपेण शक्तो नाऽस्ति। अयं तस्य पूर्वेण 'परस्परगता लोके दृश्यते रूपतुल्यता' इति वक्तव्येन तुल्यो नाऽस्ति। केवलं यवनिकाप्रक्षेपानन्तरमेव सः पूर्णां वस्तुस्थितिं जानाति। नायकविभागकरणे उदयनः धीरललितो नायकः

प्रमाणितो भवति। साहित्यदर्पणानुसारेण—

निश्चिन्तो मृदुरनिशं कलापरो धीरललितः स्यादिति।'

इति लक्षणलक्षितो नायको धीरललितो भवति। उदयने एते सर्वे गुणाः पूर्णतया वर्तन्ते' निश्चिन्तस्तु स एतादृशोऽस्ति यत् स्वकीयराज्यभारं पूर्णतया मन्त्रिभ्यः समर्पयति। कलापरायणता तु तस्याऽवर्णनीया एव। सः मृदुरेतादृशोऽस्ति यत् तस्मिन् कोपस्य दर्शनमपि न भवति।

परन्तु धीरललितत्वेऽपि तस्मिन् शौर्यस्याऽभावो नाऽस्ति। पञ्चमेऽङ्के यदा स इमां सूचनां लभते यद्रुमण्वान् आरुणेरुपरि आक्रमणं कृतवानस्ति, मगधराजस्य च सेना सन्नद्धा वर्तते, तर्हि सोऽप्युद्यतो भवति। कथयति च—

'बाढम्। अयमिदानीम्,
उपेत्य नागेन्द्रतुरङ्गतीर्णे तमारुणिं दारुणकर्मदक्षम्।
विकीर्णबाणोग्रतरङ्गभङ्गे महार्णवाभे युधि नाशयामि॥'

गुरुजनान् प्रति सम्मानभावना तु तस्मिन् परिपूर्णा वर्तते। यदा महासेनाङ्गारवत्योर्गृहादागतौ ब्राह्मणधात्र्यौ सन्देशं श्रावयतः, तदा उदयनः 'किमाज्ञापयति महासेन' इत्युक्त्वोत्तिष्ठति। यः कस्याऽप्यादेशं श्रोतुमासनादुत्तिष्ठति सः गुरुजनानाम्प्रत्यक्षत्वे कियत् सम्मानं करिष्यतीत्यनायासेनाऽनुमेयोऽस्ति।

[ २ ] **यौगन्धरायणः**—अस्ति प्रतिज्ञाबद्धो यौगन्धरायणो वत्सराजस्योदयनस्यैक आदर्शभूतः प्रधानमन्त्री। स्वप्नवासवदत्तनाटकस्य सर्वं घटनाचक्रं तस्यैव बुद्धिकौशलसाहाय्येन सम्पद्यते। कलाप्रियस्य, विलासिनः, राज्यादुदासीनस्य राज्ञो मङ्गलनिष्पादनमेकं साधारणं कार्यं न वर्तते। अयं तस्य बुद्धिवैभवस्य प्रसादोऽस्ति। 'स्वामिभक्तिः' तस्मिन् पूर्णतया पूरितो वर्तते। स्वामिनः कल्याणाय सः सर्वमपि कार्यं कर्तुमुद्यतोऽस्ति। स्वामिभक्तिस्तु तस्मिन्नेतादृशी वर्तते यद्दैवज्ञमुखेभ्यस्सः श्रुतवानस्ति यत् पद्मावती उदयनस्य पत्नी भविष्यतीति। अस्य मनसि राजानं प्रति महाननुरागो वर्तते, अतो भाविनो राजसम्बन्धिनोऽप्ययमात्मीयान् मन्यते। अतः पद्मावतीमप्ययमात्मीयाम्मन्यते। तां दृष्ट्वैव च सः कथयति—

'प्रद्वेषो बहुमानो वा सङ्कल्पादुपजायते।
भर्तृदाराभिलाषित्वादस्याम्मे महती स्वता॥'

सः सत्येतादृशे महति बुद्धिकौशलेऽपि स्वामिभक्तौ निरभिमानी वर्तते, कथयति च—

'स्वामिभाग्यानामनुगन्तारो वयम्' इति ।

यौगन्धरायणोऽयमस्ति सहनशीलतायाः भव्यमूर्तिः । प्रथमाङ्के सः राजपुरुषैरुत्सारितोऽपि उद्विग्नरहितो भूत्वा वासवदत्तां ब्रूते—'भवति ! एवमनिर्ज्ञातानि दैवतान्यवधूयन्ते ।' इयमुक्तिरस्मिन् व्यावहारिकज्ञानमपि सूचयति । अयं संसारं दुःखमयञ्च मन्यते, दुःखानन्तरञ्च सुखमवश्यमायास्यतीति दृढं विश्वसिति । अत एव प्रथमाङ्के भयभीतां स्तब्धां दुःखितामातङ्किताञ्च वासवदत्तां समाश्वासयन् सः कथयति—

'पूर्वं त्वयाऽप्यभिमतं गतमेवमासी—
च्छ्लाघ्यं गमिष्यति पुनर्विजयेन भर्तुः ।
कालक्रमेण जगतः परिवर्तमाना
चक्रारपङ्क्तिरिव गच्छति भाग्यपङ्क्तिः ।।'

यौगन्धरायणोऽयं हास्यप्रियोऽपि प्रतीयते । नाटकान्ते राज्ञोऽन्तिके ब्राह्मणवेषेणैव गच्छति । तत्र स्वभगिनीं याचते । धात्र्याः वासवदत्तायाः परिचितत्वे सति यदा राजा भवने प्रवेशायाऽऽज्ञापयति, तदा प्रतिषेधयन् यौगन्धरायणो ब्रूते—'न खलु न खलु प्रवेष्टव्यम् । मम भगिनी खल्वेषा ।' अग्रे राज्ञा भर्त्सितेऽप्यात्मानं न प्रकटयति, किन्तु राजधर्मपालनाय सुशिक्षयन् राजानं कथयति—

'भारतानां कुले जातो विनीतो ज्ञानवाञ्छुचिः ।
तन्नार्हति बलाद्धर्तुं राजधर्मस्य देशिकः ।।'

यदा उदयनः शत्रुहस्तगतां वत्सभूमिम्पुनर्लभते, वासवदत्ता च पुनः प्राप्यते तदा यौगन्धरायणस्तस्य चरणयोः पतति । धन्याऽस्त्यस्यैषा स्वामिभक्तिः । 'देव्यपनये का कृता ते बुद्धि'रिति राज्ञा पृष्टे सति सः कथयति—'कौशाम्बीमात्रं परिपालयामीति ।' एवम् यौगन्धरायण आदर्शोऽमात्यस्सिद्ध्यति ।

**[ ३ ] वासवदत्ता**—'स्वप्नवासवदत्तम्' इति नाटकस्य प्रधाना नायिका वासवदत्ता रूपयौवनशालिनी, रमणीया, पतिव्रता चाऽस्ति । सा एतादृशीनां

रमणीनां श्रेण्यामवलोक्यते,यास्स्वीयस्वामिनां हिताय सर्वस्वं त्यजन्ति। वासवदत्ता उज्जयिनीनरेशस्य प्रद्योतमहासेनस्य पुत्री वर्तते। बन्धनावस्थायामुदयनेन सह तस्याः परिचयो जातः। स एव परिचयो दृढो भूत्वा स्नेहे परिणतोऽभूत्। महासेन उभयोरपि विवाहसंस्कारं कर्तुमिच्छन्नेवाऽऽसीत्, यदुदयनश्चापल्यवशाद् वासवदत्तां गृहीत्वा पलायितः।

वासवदत्तायां स्वाभिमानस्य भावना परिपूर्णो वर्तते। अपसारणस्य नादं श्रुत्वैव सा कम्पते। सा कथयति—'तथा परिश्रमः परिखेदं नोत्पादयति, यथाऽयं परिभवः।' प्रथमेऽङ्के यदा सा पश्यति यद् मगधराजस्याऽनुचराः मार्गे जनानुत्सारयन्ति तर्हि सा सम्भावयति यत्साऽप्यपसारिता भविष्यति। सा स्वसमकुलजातान् दृष्ट्वा परिचितेऽपरिचितेऽप्यतीव प्रसन्ना भवति। अतः प्रथमाङ्के पद्मावतीं दृष्ट्वा कथयति—'राजदारिकेति श्रुत्वा भगिनिकास्नेहोऽपि मेऽत्र सम्पद्यते।' सा गुणग्राहिणी वर्तते। अतः पद्मावत्याः रूपं साऽतिप्रसन्नतया प्रशंसति—'अभिजनानुरूपं खल्वस्या रूपमिति।'

सा पतिव्रतायाः धर्मं जानाति। अतः सदैव परपुरुषदर्शनं परिहरति। अत एव तपोवने ब्रह्मचारिणि प्रविष्टे यदा वासवदत्ता लज्जमाना सती 'हुं' इत्युक्त्वा स्वीयामरुचिं प्रकटयति, तदा पद्मावतीं कथयति—'अम्भो! परपुरुषदर्शनं परिहरत्यार्या।'

सा उदयनस्य मङ्गलमिच्छति। वासवदत्तायाः हृदि उदयनस्य कृतेऽतीव स्नेहो वर्तते। अतः प्रथमाङ्के ब्रह्मचारिमुखाद् 'राजा मूर्च्छितः' इति श्रुत्वा साऽतीव दुःखिता भवति। अपि च पञ्चमेऽङ्के पद्मावत्या अस्वस्थतां ज्ञात्वा राजानं प्रति व्यग्रचित्ता सा कथयति—

'विरहपर्युत्सुकस्याऽऽर्यपुत्रस्य विश्रामस्थानभूतेयमपि नाम पद्मावत्यस्वस्था जातेति।'

स्नेहोऽप्यस्यां प्राचुर्येणाऽवलोक्यते। तथाहि चतुर्थाङ्के पद्मावती कथयति—'यथा ममार्यपुत्रस्तथैवाऽऽर्याया वासवदत्ताया इति' तदा वासवदत्ता कथयति—'अतोऽप्यधिकम्।' राज्ञो मुखात् स्वविषयकप्रेमालापं श्रुत्वा वासवदत्ता सोत्साहमानन्दं खेदं सहते। उदयनद्वारा स्वप्रशंसां श्रुत्वा साऽतीव प्रसन्ना भवति। यथा

चतुर्थाङ्के राज्ञो मुखात्—

'पद्मावती बहुमता यद्यपि रूपशीलमाधुर्यैः ।
वासवदत्ताबद्धं न तु तावन्मे मनो हरति ॥'

इति श्रुत्वा सा कथयति—

'भवतु भवतु दत्तं वेतनमस्य परिखेदस्य । अहो ! अज्ञातवासोऽप्यत्र बहुगुणः सम्पद्यते ।'

कविना आदर्शसपत्नीरूपेण चित्रितेयं वासवदत्ता पद्मावतीं दृष्ट्वा स्पर्धां न करोति । प्रथमाङ्के राज्ञा सह भाविने विवाहमवगत्य सा तामात्मीयाम्मन्यते । सा पद्मावतीमतिस्निह्यति । यद्यपि पद्मावती वासवदत्तायाः सपत्नी वर्तते, तथापि तस्या अस्वस्थतायाः वृत्तं श्रुत्वा सा अतीवोद्विग्ना भवति । सा तस्याः समाचारं ज्ञातुं चेट्या सह त्वरया समुद्रगृहं गच्छति ।

भारतीयदृष्ट्या परिणीतत्वात् वासवदत्ता राजस्त्री वर्तते । तस्यां मध्यमायाः प्रगल्भायाश्च गुणाः दरीदृश्यन्ते । स्वभावेन सा धीरवर्गस्य नायिकाऽस्ति, अतो धीरोदात्तेयं नायिकेत्यवगन्तव्यम् ।

[ ४ ] पद्मावती—'स्वप्नवासवदत्तम्' इति नाटकस्य द्वितीया नायिका उदयनस्याऽपरा पत्नी मगधनरेशस्य दर्शकस्य भगिनी अस्ति । सा रूपवती सौन्दर्यशालिनी चाऽस्ति । प्रथमेऽङ्के वासवदत्ताऽप्येनां प्रशंसति । यथा—

'नहि रूपमेव, वागपि खल्वस्याः मधुरा इति ।'

उदयनोऽपि तस्याः रूपम्प्रशंसति । चतुर्थेऽङ्के विदूषक एनां प्रशंसति । यथा—

'तत्रभवती पद्मावती तरुणी दर्शनीया अकोपना
अनहङ्कारा मधुरवाक् सदाक्षिण्येति ।'

स्वकीयकर्तव्यपालने सा कदाऽपि आलस्यन्न करोति । यतो हि वासवदत्ता परपुरुषदर्शनं परिहरति, अतः सा उदयनस्य पार्श्वे न गच्छति । पद्मावती एका बुद्धिमती नारी अस्ति । यदा विदूषकः उदयनम्पृच्छति यत्, 'वासवदत्ता पद्मावत्योर्मध्ये का भवतः प्रियेति' तदानीमुदयनः कथयति—'न खलु ब्रूयाम्, भवांस्तु मुखरः ।' पुनः वसन्तकेन पृष्टे सति पद्मावती कथयति—'एतावता भणितमार्य-

पुत्रेण।' पुनश्च सा ब्रूते—'अहो अस्य पुरोभागिता। एतावता हृदयन्न जानति।'

सा उदारमना, ज्येष्ठानाञ्च सम्मानङ्करोति। वनेस्य यत्समीप्सितं तस्य पूरणार्थंमुद्घोषयति। येन प्रकारेण वासवदत्ता आदर्शभूता सपत्नी वर्तते तथैव पद्मावत्यपि वर्तते। सा वासवदत्तायाः मातरं 'अम्बेति' पितरञ्च 'तातेति' व्यवहरति। वासवदत्तायाः प्राप्त्यनन्तरं सा तस्याश्चरणयोः पतति; अविनयाय च क्षमायाचनं करोति। पद्मावत्याश्चरित्रं भारतीयनारीणां कृते आदर्शभूतमेव। पद्मावती विवाहात्पूर्वं 'परकीया कन्या' नायिका वर्तते। विवाहानन्तरं सा राज्ञः पत्नी सम्पद्यते। अस्यामवस्थायां तस्यां मुग्धायाः मध्यमायाश्च मिश्रिताः गुणाः दरीदृश्यन्ते।

## कथासारः

### (१) प्रथमाङ्कस्य संक्षिप्तकथा

**प्रश्नः—स्वप्नवासवदत्तनाटकस्य प्रथमाङ्कस्य संक्षिप्तकथा लेख्या।**

उत्तरम्—प्रथमाङ्के वत्सराजस्योदयनस्य प्रधानमन्त्री यौगन्धरायणः स्वयं परिव्राजकवेशं धारयित्वा आवन्तिकावेशधारिण्या वासवदत्तया सह तपोवनमागच्छति। अस्मिन्नेव समये मगधराजपुत्र्याः पद्मावत्याः काञ्चुकीय उद्घोषयति 'यद् यो यं वाञ्छेत् सोऽत्रागच्छेत् राजकुमार्यश्च याचनां कुर्यात्।' यौगन्धरायणो वासवदत्तया सह पद्मावत्याः समक्षं गच्छति। सः स्वभगिनीरूपेण वासवदत्तायाः परिचयमुपस्थापयति। सः वासवदत्तायाः संरक्षणार्थं किञ्चित् कालपर्यन्तं स्ववासस्थाने तां स्थापयितुं च पद्मावतीं प्रार्थयति। पद्मावती काञ्चुकीयद्वारा स्वस्वीकृतिमुद्घोषयति। ततो यौगन्धरायणः स्वकृतज्ञतां ज्ञापयति। अस्मिन्नेवावसरे एको ब्रह्मचारी समागच्छति। सः तपोवननिवासिलोकान् वासवदत्तावियोगजन्यदुःखेन दुःखितस्योदयनस्य वृत्तान्तं सूचयति। ततो ब्रह्मचारी प्रस्थितो भवति। अनुमतिं लब्ध्वा यौगन्धरायणोऽपि गच्छति। तापस्या आशीर्वादमवाप्य पद्मावतीवासवदत्ते पर्णशालायां प्रविशतः।

## (२) द्वितीयाङ्कस्य संक्षिप्तकथा

प्रश्नः—स्वप्नवासवदत्तनाटकस्य द्वितीयाङ्कस्य संक्षिप्तकथा लेखनीया।

उत्तरम्—द्वितीयाङ्कस्य प्रवेशके चेटी आगत्य पद्मावत्याः कन्दुकक्रीडनस्य वृत्तान्तं सूचयति। अग्रेऽङ्के पद्मावती वासवदत्तया सह वार्तालापं कुर्वन्ती प्रविशति। झटित्येव धात्री आगत्य 'मगधराजेनोदयनाय पद्मावती दीयते तथोदयेन सा स्वीक्रियते' इति शुभं वृत्तान्तं सूचयति। तदनन्तरमेकाऽपरा चेटी आगच्छति। सा पद्मावत्याः कौतुकमङ्गलशुभारम्भं सूचयति, वासवदत्तां च मङ्गलस्थानम्प्रति शीघ्रं गन्तुं निवेदयति।

## (३) तृतीयाङ्कस्य संक्षिप्तकथा

प्रश्नः—स्वप्नवासवदत्तनाटकस्य तृतीयाङ्कस्य संक्षिप्तकथा प्रकाशनीया।

उत्तरम्–तृतीयाङ्के उदयनेन सह पद्मावत्याः विवाहवृत्तान्तेन ईषद् दुःखिता वासवदत्ता स्वमनः सान्त्वयन्ती प्रमदवने प्रविशति। अस्मिन् समये पुष्पाणि गृहीत्वा एका चेटी समागच्छति। सा पद्मावत्याः विवाहार्थं कौतुकमालां ग्रथितुं वासवदत्तां निवेदयति। वासवदत्तया मनोहरा पुष्पमाला रच्यते। अपरा चेटी आगत्य मालां नयति। इतस्तु वासवदत्ता उदयनस्य द्वितीयोद्वाहेन भृशं दुःखिता भवति, स्वदुःखविस्मरणार्थं च शयनागारे गच्छति।

## (४) चतुर्थाङ्कस्य संक्षिप्तकथा

प्रश्नः–स्वप्नवासवदत्तनाटकस्य चतुर्थाङ्कस्य संक्षिप्तकथा सुस्पष्टं लेख्या।

उत्तरम्–चतुर्थाङ्कस्य प्रवेशके राज्ञ उदयनस्य विवाहोपरि प्रसन्नतां प्रकटयन् स्वीयास्वस्थताम्प्रति च चिन्तितो विदूषकः प्रविशति। तदा एका चेटी तमन्वेषयन्ती तत्रागच्छति। सा विदूषकम्पृच्छति यद् जामात्रा (उदयनेन) स्नानं विहितम् न वा! विदूषकस्तामुत्तरयति यदुदयनेन स्नानं विहितमिति। उभौ ततः गच्छतः। अग्रेऽङ्के पद्मावती, वासवदत्ता, चेटी च प्रमदवने दृश्यन्ते। अत्र यो वार्तालापो

भवति तेन पद्मावतीवासवदत्तयोः राजानम्प्रति अन्योन्यम्प्रति प्रेम्णो गभीरत्वमवगम्यते। तत एव प्रविशतो राजाविदूषकौ तत्र। तावदवलोक्यैव निगूहयितुं पद्मावतीप्रभृतयः माधवीलतामण्डपे उपसर्पन्ति। राजाविदूषकावपि प्रचण्डसूर्यतापं वारयितुं तत्रैव लतामण्डपं प्रवेष्टुं कामयतः। अस्मिन्नेव समये चेटी राजाविदूषकौ लतामण्डपे प्रवेष्टुं प्रतिषेधयितुं लतामान्दोल्य भ्रमरानितस्ततः अपसारयति। राजाविदूषकौ लतामण्डपाद् बहिरेव तिष्ठतः। पद्मावतीप्रभृतयः प्रच्छन्नीभूतास्तयोर्वार्तां शृण्वन्ति। विदूषको राजानम्पृच्छति—'वासवदत्तापद्मावत्योर्मध्ये का भवतः प्रियातिशयेन!' राजा प्रथमं नैव किमपि कथयति। किन्तु विदूषकेन विशेषेणानुरुद्धे सत्येवं कथयति—

'पद्मावती बहुमता मम यद्यपि रूपशीलमाधुर्यैः।
वासवदत्तावद्धं न तु तावन्मे मनो हरति॥'

इति श्रुत्वा पद्मावती राजानमुदयनं प्रशंसति। ततो राजाऽपि विदूषकं तमेव प्रश्नं पृच्छति, विदूषकस्तमुत्तरयति यत्—

'तत्रभवती वासवदत्ता मे बहुमता। तत्रभवती पद्मावती तरुणी दर्शनीया अकोपना अनहङ्कारा मधुरवाक् सदाक्षिण्या। अयं चापरो महान् गुणः, स्निग्धेन भोजनेन मां प्रत्युद्गच्छति वासवदत्ता—कुत्र न खलु गत आर्यवसन्तक! इति।' अनेन परिहासेन राज्ञः वासवदत्तासम्बन्धिनी स्मृतिर्नवीना भवति, तस्य नेत्राभ्याञ्चाश्रुपातो जायते। विदूषकस्तन्मुखप्रक्षालनार्थं जलमानेतुं गच्छति। अवसरं लब्ध्वा वासवदत्ता लतामण्डपाद् बहिर्गच्छति। गमनकाले सा पद्मावतीं राज्ञः समक्षं गन्तुं कथयति। अत्रान्तरे विदूषकः जलं गृहीत्वा आगच्छति। इतः पद्मावत्यपि गच्छति। सा राज्ञो नेत्रयोरश्रुबिन्दूनां कारणं पृच्छति। विदूषको वक्ति—'भवति! वातनीतेन काशकुसुमरेणुनाऽक्षिनिपतितेन साश्रुपातं खलु तत्रभवतो मुखम्।' तदेव समर्थयन् राजा ब्रूते—

'शरच्छशाङ्कगौरेण वाताविद्धेन भामिनि।
काशपुष्पलवेनेदं साश्रुपातं मुखं मम॥'

ततो विदूषको राजानं कथयति यत् सम्भवतोऽपराह्णे मगधराजो भवता सह सुहृज्जनदर्शनं करिष्यतीति। ततः सर्वे गच्छन्ति।

## पञ्चमाङ्कस्य संक्षिप्तकथा

**प्रश्नः—स्वप्नवासवदत्तनाटकस्य पञ्चमाङ्कस्य संक्षिप्तकथा प्रकाशनीया।**

उत्तरम्—पञ्चमाङ्कस्य प्रवेशके पद्मिनिकामधुरिके आगच्छतः। तयोर्वार्तालापेन ज्ञायते यत् पद्मावती शीर्षवेदनया पीडिताऽस्ति। तस्याः कृते 'समुद्रगृह' इत्यभिधेये प्रकोष्ठे किल शय्याऽऽस्तीर्णा वर्तते। पद्मिनिका मधुरिकां कथयति—'गच्छ आवन्तिकां (वासवदत्तां) आनय यतस्सा मधुरालापैः पद्मावत्या शिरोवेदनां दूरीकुर्यात्।' मधुरिका वासवदत्तामानेतुं गच्छति, पद्मिनिका च वसन्तकमन्वेषयति। विदूषकसाक्षात्कारे सति पद्मिनिका तं पद्मावत्याः अस्वस्थतावृत्तान्तं श्रावयति, राजानं प्रति निवेदयितुञ्च कथयति। अग्रे पद्मिनिका शीर्षानुलेपनमानेतुं गच्छति, विदूषकश्च राजानं पद्मावत्याः समाचारं श्रावयितुं गच्छति।

प्रवेशकानन्तरं पञ्चमाङ्क आरभ्यते। वासवदत्तायाः वियोगे दुःखी राजा रङ्गभूमिं प्रविशति। अत्रान्तरे विदूषक आगत्य पद्मावत्या अस्वस्थतायाः समाचारं श्रावयति। उभौ समुद्रगृहं प्रति गच्छतः। तत्र पद्मावतीमनवाप्य तत्प्रतीक्षाभिःप्रायेण पद्मावतीकृते आस्तीर्णां शय्यामधिशेते राजा। सायङ्कालीनशीतलमन्द-सुगन्धवायुना सः निद्रामन्थरो भवति। विदूषकोऽपि शीतमपवारयितुं वस्त्रग्रहणाय याति। अस्मिन् समये आवन्तिकावेशधारिणी वासवदत्ता चेटी च समागच्छति। ततश्चेटी वासवदत्तां समुद्रगृहं गमनायोक्त्वा स्वयं शीर्षानुलेपनमानेतुं व्रजति, वासवदत्तापि समुद्रगृहे प्रविशति। सा तत्र शयानं राजानं पद्मावतीं ज्ञात्वा तत्पार्श्वे स्वपिति, किन्तु सहसा राजानमवगत्योत्तिष्ठति। राजाऽपि स्वप्ने वासवदत्तां पश्यति तथा प्रणयवाक्यैस्तां वदति। किञ्चित्कालानन्तरं वासवदत्ता मनसि शङ्कते यत कश्चित् तां तत्रोपविष्टां न पश्येत्। अतस्सा राज्ञोऽवलम्बमानं हस्तं शय्योपरि निधाय ततो गच्छति। राजाऽपि त्वरितमुत्थाय तारस्वरेण शब्दं कुर्वन् तामनुगच्छति, परं द्वारपक्षेण ताडितो भूत्वा विरमति। अस्मिन्नवसरे विदूषक आगच्छति। राजा वासवदत्तादर्शनवृत्तान्तं वर्णयति, वासवदत्तायाःजीवितत्वमपि सम्भावयति। विदूषकस्तं सान्त्वयन् कथयति यत् सा भवता स्वप्ने दृष्टा भवेत्। ततो राजाविदूषकौ भवने आगच्छतः। तत्र काञ्चुकीयो राजानं महाराजदर्शक-

वृत्तान्तं श्रावयति। सः कथयति यत्—'सेनया सह रुमण्वानागतः, मगधस्य सेनाऽपि सन्नद्धावर्तते, अत उत्तिष्ठतु, शत्रुविनाशाय च प्रयाणं करोतु भवान्।' ततो राजा झटित्युत्थाय प्रयाणं करोति।

## षष्ठाङ्कस्य संक्षिप्तकथा

**प्रश्नः—स्वप्नवासवदत्तनाटकस्य षष्ठाङ्कस्य संक्षिप्तकथा विवेचनीया।**

**उत्तरम्**—षष्ठाङ्कस्य विष्कम्भके राज्ञो महासेनप्रद्योतस्य रैभ्य नामकः काञ्चुकीय उदयनं महासेनस्य सन्देशं श्रावयितुमागच्छति। सः प्रतिहारीं कथयति यद्—'गत्वा राजानमुदयनं सूचयतु भवान् यन्महाराजमहासेनस्य समीपादागतः तस्य काञ्चुकीयः महिष्या अङ्गारवत्या प्रेषिता धात्री चोपस्थिता।' प्रतीहारी राजानं सन्देशं श्रावयितुं स्वकीयामसमर्थतां प्रकटयति। सा कथयति—'घोषवतीत्याख्यवीणाभिगमनादधुना राज्ञो वासवदत्तासम्बन्धिदुःखं नूतनं जातमतोऽधुना तत् समीपं गमनस्य समयो नाऽस्ति।' पुनश्च काञ्चुकीयो वदति—'निवेदयतु यः सन्देशोऽस्माभिरुक्तः, स एव तत्सम्बन्धी अतस्त्वं गच्छ।' प्रतीहारी राजानं निवेदयितुं गच्छति। अग्रेऽङ्के विलपन् राजा प्रविशति। विदूषक आगत्य तं सान्त्वयति। तदा राजा विदूषकं घोषवतीवीणाशुद्ध्यर्थं प्रेषयति। विदूषके गते प्रतीहारी आगत्य काञ्चुकीयधात्र्योरागमनं सूचयति। राजा पद्मावतीमाह्वयति। पद्मावत्याः समुपस्थितौ राजा काञ्चुकीयधात्र्योरानयनमाज्ञापयति। उभौ चाऽऽगत्य राजानं महासेनस्य सन्देशं श्रावयतः। तौ कथयतो यत्—'महासेनस्तव वासवदत्तायाश्च चित्रफलकं निर्मापयित्वा विवाहमकरोत्।' एवमुक्त्वा तौ राज्ञः समक्षं चित्रं स्थापयतः। वासवदत्तायाश्चित्रं दृष्ट्वैव पद्मावती आवन्तिकायाः स्मरणं करोति। सा राजानं निवेदयति—'एतादृशी रूपवती स्त्री अत्रैव निवसति।' तदा राजा तामानेतुमाज्ञापयति। अस्मिन्समये ब्राह्मणवेशधारी यौगन्धरायणस्स्वभगिनीमानेतुमागच्छति। इतः पद्मावती आवन्तिकावेशधारिणीं वासवदत्तां गृहीत्वा राजानं प्रत्युपसर्पति। महासेनस्य धात्रीवासवदत्तामवगच्छति। झटित्येव यौगन्धरायणोऽपि ज्ञायते। अन्ततो गत्वा सर्वत्राऽऽनन्दो भवति। ❁

# श्लोकव्याख्यात्मकप्रश्नोत्तरखण्डम्

## प्रथमोऽङ्कः

प्रश्नः—

उदयनवेन्दुसवर्णावासवदत्ताबलौ बलस्य त्वाम् ।
पद्मावतीर्णपूर्णौ वसन्तकम्रौ भुजौ पाताम् ॥ १ ॥

पद्यमिदं प्रसङ्गनिर्देशान्वयपुरस्सरं सुस्पष्टं व्याख्येयम् ।

( सन् १९६०, १९८२ )

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—श्लोकोऽयं महाकविभासप्रणीतस्य 'स्वप्नवासवदत्त' नाटकस्य प्रथमाङ्कत उद्धृतोऽस्ति । सूत्रधारेण स्थापकेन वा वस्त्वादिनिर्देशः कार्यं इति नाटकनियमस्याऽऽवश्यकत्वाभ्युपगम्येन प्रधानपात्रनामधेयसूचनपुरःसरं मङ्गलं निबध्नन् निर्विघ्नसमाप्तिकामः कविरत्र पदविन्यासकौशलेन सूत्रधारद्वारा पात्रोपक्षेपरूपं वस्त्वंशनिर्देशं समाचरति ।

अन्वयः—उदयनवेन्दुसवर्णौ, आसवदत्ताबलौ, पद्मावतीर्णपूर्णौ, वसन्तकम्रौ, बलस्य भुजौ, त्वाम्, पाताम् ।

व्याख्या—उदये=उदयकाले यो नवः=नूतनः नवीनः इन्दुः=चन्द्रमाः तेन समानो वर्णो ययोस्तावुदयनवेन्दुसवर्णौ=औदयिकचन्द्रसदृशकान्तिमन्तौ । यद्वा उत्=ऊर्ध्वम्, उन्नतो वा अयः=गमनं शोभासम्पदुत्कर्षो वा यस्याऽसौ उदयः, नवश्चासौ इन्दुश्च नवेन्दुः, समानो वर्णो ययोस्तौ सवर्णौ, उदयनवेन्दुना सवर्णौ उदयनवेन्दुसवर्णौ । आसवेन=मद्येन, दत्तम्=उत्पादितम्, अबलम्=बलाभावो याभ्यां तौ आसवदत्ताबलौ=मद्यपानजनितशैथिल्यभाजौ । पद्मस्य=कमलस्य,अवतीर्णम्=अवतारः, तेन पूर्णौ=परिपूर्णौ=सम्पन्नौ इति पद्मावतीर्ण-

पूर्णौ=कमलरूपेण समुपस्थितौ, कमलतुल्यौ कोमलावित्यर्थः। वसन्त इव कम्रौ वसन्तकम्रौ=मनोहरौ शोभावहत्वात्, बलस्य=बलरामस्य, भुजौ=बाहू 'भुज-बाहू प्रवेष्टोदो'रित्यमरः। त्वाम्=नाटकावलोकनकुतूहलेनोपस्थितं सामाजिकवर्ग-मित्यर्थः। पाताम्=रक्षताम्। कवेः पदरचनाचातुर्यान्मङ्गलाचरणव्याजेन प्रधान-पात्राणामुल्लेखादत्र मुद्रालङ्कारः। तल्लक्षणञ्च—'सूच्यार्थसूचनं मुद्रा प्रकृतार्थपरैः पदैः।' आर्याछन्दः, तल्लक्षणञ्च यथा श्रुतबोधे—'यस्याः पादे प्रथमे द्वादश मात्रास्तथा तृतीयेऽपि। अष्टादश द्वितीये चतुर्थके पञ्चदश सार्या' इति।

**समासः**—उदये यो नवः इन्दुस्तेन समानो वर्णो ययोस्तावुदयनवेन्दुसवर्णौ। यद्वा उत् अयः यस्यासौ उदयः नवश्चासौ इन्दुश्च नवेन्दुः समानो वर्णो ययोस्तौ सवर्णौ, उदयनवेन्दुना सवर्णौ उदयनवेन्दुसवर्णौ। आसवेन दत्तम् अबलम् याभ्यां तौ वासवदत्तावलौ। पद्मस्य अवतीर्णम् पद्मावतीर्णम्, तेन पूर्णौ इति पद्मावतीर्ण-पूर्णौ। वसन्त इव कम्रौ, वसन्तकम्रौ।

**प्रश्नः**—

भृत्यैर्मगधराजस्य स्निग्धैः कन्यानुगामिभिः।
धृष्टमुत्सार्यते सर्वस्तपोवनगतो जनः॥ २॥

पद्यमिदं प्रसङ्गनिर्देशपुरस्सरं सुस्पष्टं व्याख्येयम्।

**उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च**—'स्वप्नवासवदत्त' नाटकस्य प्रथमाङ्कादुद्धृते पद्येऽस्मिन् कविर्वर्णयति यत् सूत्रधारस्य विज्ञापनव्यग्रे शब्द इव श्रूयते। पुनः सूत्रधारो निश्चित्य कथयति यन्मगधराजस्याऽनुचरैस्तपोवनगतो जनो धृष्टमुत्सार्यते :

**अन्वयः**—कन्यानुगामिभिः, मगधराजस्य, स्निग्धैः, भृत्यैः, तपोवनगतः, सर्वः, जनः, धृष्टम्, उत्सार्यते।

**व्याख्या**—अनुगन्तुं शीलमेषां तेऽनुगामिनः=परिचारकाः, कन्यायाः=कुमार्याः पद्मावत्याः अनुगामिनस्तैः=पद्मावतीपरिचारकैरित्यर्थः। मगधानां राजा इति मगधराजस्तस्य मगधराजस्य=मगधदेशाधीश्वरस्य दर्शकस्य, स्निग्धैः=स्नेहसम्पन्नैः, प्रियैः आप्तैर्विश्वस्तैरित्यर्थः। भृत्यैः=सेवकैः। तपोवनं गत इति तपोवनगतः=आश्रमस्थः, तपोवननिवासी, सर्वः=अखिलः बालवृद्धादिः जनः=

तापसलोकः । धृष्टम्=अविनयं यथा स्यात्तथा । उत्सार्यते=अपसार्यते, दूरीक्रियते इति यावत् । उत्सारणायां धृष्टत्वं चाऽत्र भृत्यानां प्रभुनिदेशवशवर्तिनामस्वतन्त्राणां युज्यत एव । पद्मावतीप्रवेशसौकर्योपयोगिनीयं तापसजनोत्सारणा भटैराचर्यमाणा नेपथ्ये प्रवर्तते, तस्या एव शब्दोऽयं श्रूयमाणोऽस्तीति सूत्रधारस्योक्तेराशयः । अनुष्टुप् वृत्तम् । तल्लक्षणं यथा श्रुतबोधे—'श्लोके षष्ठं गुरु ज्ञेयं सर्वत्र लघु पञ्चमम् । द्विचतुष्पादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः ।' इति ।

**समासः**—अनुगन्तुं शीलमेषां तेऽनुगामिनः, कन्यायाः अनुगामिनः कन्यानुगामिनस्तैः कन्यानुगामिभिः । मगधानां राजा इति मगधराजस्तस्य मगधराजस्य । तपोवनं गतः इति तपोवनगतः ।

**प्रश्नः—निम्नांकितं पद्यं सन्दर्भप्रसङ्गनिर्देशान्वयादिपुरस्सरं सुस्पष्टं संस्कृतगिरा व्याख्यायताम् ।**

**धीरस्याश्रमसंश्रितस्य वसतस्तुष्टस्य वन्यैः फलै-**
**र्मानार्हस्य जनस्य वल्कलवतस्त्रासः समुत्पाद्यते ।**
**उत्सिक्तो विनयादपेतपुरुषो भाग्यैश्चलैर्विस्मितः**
**कोऽयं भो ! निभृतं तपोवनमिदं ग्रामीकरोत्याज्ञया ॥ ३ ॥**

**उत्तरम्**—**सन्दर्भः प्रसङ्गनिर्देशश्च**—'स्वप्नवासवदत्त' नाटकस्य प्रथमाङ्कादुद्धृते पद्येऽस्मिन् कविर्मगधराजस्य सेवकवर्गद्वारा तपोवनवासिनामपसारणं वर्णयति । परिव्राजकवेषेण यौगन्धरायणः आवन्तिकावेषेण च वासवदत्ता आयातस्तथा तपस्विनामपसारणं कर्णं दत्त्वा श्रुत्वा च दृष्ट्वा यौगन्धरायणः कथयति कथमिहाप्यपसार्यते ? कुतः ? वल्कलधारिणः फलोपजीव्यान् आश्रमवासिमुनिजनान् कुतस्त्रासः समुत्पाद्यते, तपोवनमिदं च ग्रामीक्रियते इति ।

**अन्वयः**—धीरस्य, आश्रमसंश्रितस्य, वसतः, वन्यैः, फलैः, तुष्टस्य, मानार्हस्य, वल्कलवतः, जनस्य, त्रासः, समुत्पाद्यते, भोः ? उत्सिक्तः, विनयादपेतपुरुषः, चलैः, भाग्यैः, विस्मितः, अयं, कः, यः, निभृतं, इदं, तपोवनम्, आज्ञया, ग्रामीकरोति ।

**व्याख्या**—धीरस्य=धैर्ययुक्तस्य, आश्रमं=तपोवनं संश्रितस्तस्य, आश्रमसंश्रितस्य=आश्रमाश्रितस्य, अरण्ये तपोवने वा वसतः=वासं कुर्वतः, वने भवा

वन्यास्तैर्वन्यैः=आरण्यकैः, फलैः=सस्यैः, तुष्टस्य=सन्तुष्टस्य, मानमर्हत्यसौ मानार्हस्तस्य मानार्हस्य=सम्मानार्हस्य, वल्कलान्येव वस्त्राणि यस्य सः, तस्य वल्कलवतः=वृक्षत्वग्धारिणः, जनस्य=सामाजिकवर्गस्य, त्रासो=भयं, समुत्पाद्यते=उत्पाद्यते। भोः!=अरे!, उत्सिक्तः=उद्धतः, विनयो=नम्रत्वं तस्मादपेताः=दूरीभूताः पुरुषाः=भृत्यरूपाः यस्य सः विनयादपेतपुरुषः= उद्धतभृत्य इत्यर्थः। चलैः=अस्थिरैः, भाग्यैः=सत्तादिरूपविभवैः, ऐश्वर्यशालित्वरूपैरिति यावत्। विस्मितः=विशेषेण स्मितः=अतिगर्वितः, 'विस्मयोऽद्भुतमाश्चर्यम्' इति कोषाद्विस्मयशब्दस्याश्चर्यार्थकत्वमिव 'दर्पोऽवलेपोऽवष्टम्भश्चित्तोद्रेकः स्मयो मदः' इति कोषप्रामाण्यात् स्मयतेर्दर्पार्थकत्वमपि युज्यते। अयं=एषः, कः पुरुषोऽस्ति? यः निभृतम्=शान्तम्, इदम्=एतत्, तपोवनम्, आज्ञया=उत्सारणरूपेणाऽऽदेशेन। न ग्रामः अग्रामः, अग्रामं ग्रामं करोतीति ग्रामीकरोति। अत्र शार्दूलविक्रीडितं वृत्तम्। तल्लक्षणम् यथा वृत्तरत्नाकरे— 'सूर्याश्वैर्मसजेस्ततः सगुरवः शार्दूलविक्रीडितम्' इति।

समासः—आश्रमं संश्रितः आश्रमसंश्रितस्तस्य आश्रमसंश्रितस्य। मानमर्हतीत्यसौ मानार्हस्तस्य मानार्हस्य। वल्कलान्येव वस्त्राणि यस्य सः, तस्य वल्कलवतः। विनयो नम्रत्वं तस्मादपेताः पुरुषाः यस्य सः विनयादपेतपुरुषः। न ग्रामः अग्रामः, अग्रामं ग्रामं करोतीति ग्रामीकरोति।

प्रश्नः—'पूर्वं त्वयापीति' पद्यम् सन्दर्भप्रसङ्गादिनिर्देशपुरस्सरं सुस्पष्टं व्याख्यायताम्। (१९६५; ६८, ७०)

उत्तरम्—

पूर्वं त्वयाप्यभिमतं गतमेवमासी-<br>
च्छ्लाघ्यं गमिष्यसि पुनर्विजयेन भर्तुः।<br>
कालक्रमेण जगतः परिवर्तमाना<br>
चक्रारपङ्क्तिरिव गच्छति भाग्यपङ्क्तिः॥ ४॥

सन्दर्भः प्रसङ्गनिर्देशश्च—'स्वप्नवासवदत्त' नाटकस्य प्रथमाङ्कादुद्धृत पद्येऽस्मिन् कविः मगधराजस्य सेवकवर्गद्वारा तपस्विजनानामुत्सारणसमये यौगन्धरायणवासवदत्तयोर्वार्तालापं वर्णयति। वासवदत्तायाः 'आर्य! परिश्रमः

तथा खेदं नोत्पादयति यथाऽयमुत्सारणाख्यस्तिरस्कार' इति वचनं श्रुत्वा यौगन्धरायणोऽत्र वासवदत्तां समाश्वासयति यदुत्सारणया न खेदो विधेयः। यतो हि चक्रपंक्तिरिव भाग्यस्य नियमः परिवर्तनशीलो भवतीति।

अन्वयः—पूर्वम्, त्वया, अपि, एवम्, अभिमतं, गतम्, आसीत्, भर्तुः, विजयेन, पुनः, श्लाघ्यं, गमिष्यसि, कालक्रमेण, परिवर्तमाना, जगतः, भाग्यपंक्तिः, चक्रारपंक्तिरिव, गच्छति।

व्याख्या—पूर्वम्=पूर्वस्मिन् काले, त्वया अपि=भवत्या अपि, एवम्, अभिमतम्=स्वेच्छया, गतम्=गमनमासीत्। भर्तुः=पत्युर्महाराजस्योदयनस्य विजयेन=जयेन, पुनः=भूयः, श्लाघ्यम्=प्रशंसनीयं यथा स्यात्तथा, गमिष्यसि=यास्यसि। यतो हीति शेषः। कालक्रमेण=समयक्रमेण, परिवर्तमाना=परिभ्रममाणा, भाग्यस्य=उच्चावचावस्थायाः पंक्तिः=परम्परा, श्रेणिरिति यावत्। चक्रस्य=रथाङ्गस्य, अराणां पंक्तिः इति चक्रारपंक्तिरिव, गच्छति=याति। यथा चक्रगतान्यराणि क्रमेणोपर्यधो गच्छति=दृश्यन्ते, तथा शुभान्यशुभानि च जनस्य भागधेयान्यपि समयगत्यनुसारं विपरिवर्तन्त एवेत्यद्य समयमहिमोद्भवं क्लेशमनुभवन्त्यापि समयगतिं प्रतीक्षमाणया त्वया न मनः खेदनीयमिति श्लोकार्थः। अत्र पूर्वार्धप्रतिपादितस्य विशेषस्योत्तरार्धप्रतिपादितेन सामान्येनार्थेन समर्थनात् सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः। वसन्ततिलकावृत्तम्। तल्लक्षणं यथा वृत्तरत्नाकरे—'उक्ता वसन्ततिलका तभजा जगौ गः' इति।

समासः—कालस्य क्रमः कालक्रमस्तेन कालक्रमेण। भाग्यस्य पंक्तिः भाग्यपंक्तिः। चक्रस्य अराणि चक्राराणि, चक्राराणां पंक्तिः चक्रारपंक्तिः।

प्रश्नः—

परिहरतु भवान् नृपापवादं न परुषमाश्रमवासिषु प्रयोज्यम्।
नगरपरिभवान् विमोक्तुमेते वनमभिगम्य मनस्विनो वसन्ति ॥ ५ ॥

इति पद्यं ससन्दर्भं व्याख्यायताम्। (ई० १९७८)

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—'स्वप्नवासवदत्त' नाटकस्य प्रथमाङ्कतः समुद्धृते पद्येऽस्मिन् कविः तपस्विनामुत्सारणसमये काञ्चुकीयद्वारा तपस्विना-

मुत्सारणानिषेधं वर्णयति । अत्र काञ्चुकीयः सम्भषकनामानं भटं प्रति तपस्विना-मुत्सारणाया अनौचित्यं निवेदयति ।

अन्वयः—भवान्, नृपापवादं, परिहरतु, आश्रमवासिषु, परुषं, न, प्रयोज्यम्, एते, मनस्विनः, नगरपरिभवान्, विमोक्तुं, वनम्, अभिगम्य, वसन्ति ।

व्याख्या—भवान्=त्वम्, नृपस्य=राज्ञो दर्शकस्य, अपवादो=निन्दा तम् नृपापवादम् । सा च निन्दा-नगरनिर्विशेषमत्रापि तपोवने प्रवर्तितयाऽनुचितोत्सारणाज्ञया परैरारोप्यमाणेव । परिहरतु=दूरीकरोतु । आश्रमवासिषु=तपोवन-निवासिषु 'तेषां विषये' परुषम्=निष्ठुरं 'वचनम्', न प्रयोज्यम्=न प्रयोक्तव्यम् । यतो हीति शेषः । एते=इमे, प्रशस्तं मनो येषां ते मनस्विनः=प्रशस्तमानसाः, नगरेषु सुलभाः परिभवा इति नगरपरिभवास्तान् नगरपरिभवान्=जनापवादान्, नगरे सम्भावितापमानानिति यावत्, विमोक्तुं=परिहर्तुं, वनम्=अरण्यं, अभिगम्य=गत्वा, वसन्ति=निवसन्ति । तपस्विनामनादरेण समुदाचारविरोधोऽनर्थपत्तिश्चेत्येवंविधानुचितकार्याचरणं न श्रेयस्करमिति गूढोऽर्थः । काव्यलिङ्गम-लङ्कारः । पुष्पिताग्रावृत्तम् । तल्लक्षणम् यथा वृत्तरत्नाकरे—'अयुजिनयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा ।' इति ।

समासः—नृपस्य अपवादः नृपापवादस्तं नृपापवादम् । आश्रमे वसन्ति तच्छीला आश्रमवासिनस्तेषु आश्रमवासिषु । नगरे सुलभाः अनुभूयमानाः वा परिभवाः नगरपरिभवास्तान् नगरपरिभवान् । प्रशस्तं मनो येषां ते मनस्विनः ।

प्रश्नः—

तीर्थोदकानि समिधः कुसुमानि दर्भान्
स्वैरं वनादुपनयन्तु तपोधनानि ।
धर्मप्रिया नृपसुता हि धर्मपीडा-
मिच्छेत्तपस्विषु कुलव्रतमेतदस्याः ॥ ६ ॥

पद्यमिदं सवैशिष्ट्यं संस्कृतव्याख्यया स्फुटीक्रियन्ताम् ।

( १९७७, १९७९ )

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—'स्वप्नवासवदत्त' नाटकस्य प्रथमाङ्कादुद्धृते पद्येऽस्मिन् कविः यौगन्धरायणकाञ्चुकीययोर्वार्तालापं वर्णयति । तत्र

तपोवनं गतायाः मगधराजपुत्र्याः पद्मावत्याः आदेशानुसारं काञ्चुकीय उद्घोषयति यदुत्सारणया तपस्विभिर्न भेतव्यमिति ।

अन्वयः—भवन्तः, तपोधनानि, तीर्थोदकानि, समिधः, कुसुमानि, दर्भान्, स्वैरं, वनाद्, उपनयन्तु, हि, धर्मप्रिया, नृपसुता, तपस्विषु, धर्मपीडां, न, इच्छेत्, एतत्, अस्याः, कुलव्रतम् ।

व्याख्या—भवन्तः=तपस्विनः । तपसः=तपस्यायाः, धनानि=साधनानि तपः साधनीभूतान् पदार्थानित्यर्थः । तीर्थानां=पवित्राणां नद्यादीनां उदकानि= जलानि । समिधः=पलाशतरोः काष्ठखण्डानि । कुसुमानि=पुष्पाणि, दर्भान्= कुशान्, स्वैरं=यथेच्छं, वनाद्=अरण्याद्, उपनयन्तु=आनयन्तु । हि=यतः । धर्मःप्रियो यस्याः सा धर्मप्रिया=धर्मानुरागिणी, नृपसुता=राजपुत्री, तपस्विषु= तपस्विजनेषु विषये धर्मपीडां=धर्मस्य=धर्माचरणस्य, धर्मे=धर्माचरणे वा पीडा= वाधा इति धर्मपीडा तां धर्मपीडाम् । 'पीडा बाधे'त्यमरः । धर्माचरणे व्यवधान- मित्यर्थः । न इच्छेत्=नाभिलषेत् । एतत्=धर्माचरणत्वम्, धर्मपालनं वेत्यर्थः । अस्याः=पद्मावत्याः कुलव्रतम्=वंशव्रतं परम्पराचारो वाऽस्ति । कुलक्रमागतं मुनिजनतपश्चरणाभिरक्षणव्रतं पालयन्त्या धर्मेऽनुरागं वहन्त्याः पद्मावत्यास्तापस- जनतपोविघ्नावरोधरूपोऽभिलाषः पूरणीयो भवद्भिरिति तीर्थादिपदार्थाहरणेन तात्पर्यम् । काव्यलिङ्गमलङ्कारः । वसन्ततिलकावृत्तम् ॥

समासः—तपसो धनानि तपोधनानि । तीर्थानामुदकानि तीर्थोदकानि । धर्मःप्रियो यस्याः सा धर्मप्रिया । नृपस्य सुता नृपसुता । धर्मस्य पीडा धर्मे पीडा इति वा धर्मपीडा तां धर्मपीडाम् । प्रशस्तं तपोऽस्त्येषां ते तपस्विनस्तेषु तपस्विषु । कुलादागतं व्रतं कुलव्रतम् ॥

प्रश्नः—

प्रद्वेषो बहुमानो वा सङ्कल्पादुपजायते ।
भर्तृदाराभिलाषित्वादस्याम्मे महती स्वता ॥ ७ ॥

पद्यमिदं सन्दर्भप्रसङ्गादियुतं संस्कृतगिरा व्याख्येयम् ।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—'स्वप्नवासवदत्त' नाटकस्य प्रथमा- ङ्कादुधृते पद्येऽस्मिन् यौगन्धरायणः काञ्चुकीयद्वारा पद्मावत्याः परिचयं लब्ध्वे-

वाऽऽत्मगतं कथयति यत् 'पुष्पकभद्रादिभिर्दैवज्ञैर्निर्दिष्टा पद्मावती स्वामिनो देवी भविष्यतीति कारणात् मे अस्याम्महती स्वता वर्तते' इति ।

अन्वय:—प्रद्वेष:, बहुमानो, वा, सङ्कल्पाद्, उपजायते, भर्तृदाराभिलाषित्वाद्, अस्याम्, मे, महती, स्वता वर्तते ।

व्याख्या—प्रद्वेष:=द्वेषातिशय:=तिरस्कार:, बहुमानो=अत्यादर:, वा=अथवा, सङ्कल्पात्=मनोव्यापारात् उपजायते=उत्पद्यते । भर्तु:=स्वामिन: दारा:=भार्या एवंरूपेणाभिलाषोऽस्याऽस्तीति भर्तृदाराभिलाषी तस्य भावस्तस्मात् भर्तृदाराभिलाषित्वात्, अस्यां=पद्मावत्यां, मे=मम, महती=अनल्पा, स्वता=आत्मीयता वर्तते । यौगन्धरायण: आत्मगतं विचारयति यत् पूर्वम् अनुचितोत्सारणाज्ञाप्रवर्तिकेयमिति सङ्कल्पात् पद्मावत्यां द्वेषो ममासीत्, इदानीं तु 'भूयादियं मे महिषीति सङ्कल्पो मयि महतीं पद्मावतीविषयिणीं स्वात्मीयताबुद्धिं बलादुत्पादयतीति भाव: । अनुष्टुब्वृत्तम् ।

समास:—भर्तु: दारा: एवंरूपेणाभिलाषोऽस्यास्तीति भर्तृदाराभिलाषी तस्य भावस्तस्मात् भर्तृदाराभिलाषित्वात् ।

प्रश्न:—

कस्यार्थ: कलशेन को मृगयते वासो यथानिश्चितं
दीक्षां पारितवात् किमिच्छति पुनर्देयं गुरोर्यद् भवेत् ।
आत्मानुग्रहमिच्छतीह नृपजा धर्माभिरामप्रिया
यद् यस्यास्ति समीप्सितं वदतु तत् कस्याद्य किं दीयताम् ॥८॥

पद्यमिदं सुस्पष्टं व्याख्यायताम् ।

उत्तरम्—सन्दर्भ: प्रसङ्गनिर्देशश्च—'स्वप्नवासवदत्त' नाटकस्य प्रथमाङ्कादुद्धृते पद्येऽस्मिन् काञ्चुकीयद्वारा पद्मावती आश्रमवासिनस्तपस्विन: सम्बोध्य धर्मार्थमर्थेनोपनिमन्त्रयते ।

अन्वय:—कस्य, कलशेन, अर्थ:, क:, वास:, मृगयते, क: यथानिश्चितम्, दीक्षां, पारितवान्, किमिच्छति, यत्, पुन:, गुरोर्देयं भवेत्, इह, धर्माभिरामप्रिया, नृपजा, आत्मानुग्रहमिच्छति, अत:, यस्य, यत्, समीप्सितम्, अस्ति, तद्, वदतु, अद्य, कस्य, किं दीयताम् ?

**व्याख्या**—कस्य = तपस्विजनस्य, कलशेन = घटेन, कमण्डलुनेति यावत् अर्थः = प्रयोजनम् कः खलु तापसः वासः = वस्त्रं मृगयते = अन्वेषयति = अभिलषतीत्यर्थः । कः एतादृशः ? यो यथानिश्चितम् = निश्चय एव निश्चितं भावे क्तः, निश्चयो = निर्धारणं, सङ्कल्पो वा निश्चितमनतिक्रम्येति याथार्थ्येऽव्ययीभावः । 'श्रुत्युक्तं पूर्णमध्येष्ये' इति निर्धारणानुसारं सङ्कल्पानुसारं वेत्यर्थः । दीक्षां = गुरुगृहवासपूर्वकमध्ययनव्रतं पारितवान् = समापितवान्, किमिच्छति = किमभिलषति, यत्, पुनः = भूयः, गुरोः = उपाध्यायस्य, गुरवे इति यावत् देयं = दातव्यं, भवेत् = स्यात्, को गुरुदक्षिणार्थं किं वस्तु इच्छतीत्यर्थः इह = अत्राश्रमे, धर्मेण = धर्माचरणेन अभिरामाः = शोभनाः जनाः प्रियाः यस्याः सा धर्माभिरामप्रिया, नृपजा = नृपाज्जाता = राजपुत्री पद्मावती आत्मानुग्रहं = आत्मन्यनुग्रहं = कृपां इच्छति = अभिलषति, अतः यस्य यत् वस्तु समीप्सितं = अभिवाञ्छितम्, अस्ति, तद् वदतु = कथयतु । अद्य, कस्य = कस्य तपस्विजनस्य कृते, किं दीयताम् = वितीर्यताम् ! भवत्सु कः कं पदार्थमनया दीयमानं प्राप्तुमिच्छति ? किमनया च कस्मै देयम् ? भवन्तः स्वाभिलषितं निःशङ्कं प्रकाशयन्तु । भवदर्थश्रवणादेवेयमनुगृहीतात्मानं मंस्यते इति श्लोकार्थः । शार्दूलविक्रीडितं वृत्तम् ।

**समासः**—धर्मेऽभिरमन्ते इति धर्माभिरामाः, धर्माभिरामाः प्रियाः यस्या सा धर्माभिरामप्रिया । धर्मे अभिरामो येषां ते धर्माभिरामाः, ते प्रियाः यस्याः सा धर्माभिरामप्रिया । नृपाद् जाता नृपजा । आत्मनः अनुग्रहः, आत्मनि अनुग्रह इति वा आत्मानुग्रहस्तमात्मानुग्रहम् ।

**प्रश्नः**—

कार्यं नैवार्थैर्नापि भोगैर्न वस्त्रै-
नर्हिं काषायं वृत्तिहेतोः प्रपन्नः ।
धीरा कन्येयं दृष्टधर्मप्रचारा
शक्ता चारित्रं रक्षितुं मे भगिन्याः ॥ ९ ॥

पद्यमिदं सुस्पष्टं व्याख्यायताम् ।

**उत्तरम्**—सन्दर्भः प्रसङ्गनिर्देशश्च—'स्वप्नवासवदत्त' नाटकस्य प्रथमाङ्कादुद्धृते पद्येऽस्मिन् काञ्चुकीयद्वारा 'कः किमिच्छतीति वदेत्' इति

पद्मावत्या उद्घोषणां श्रुत्वा दानार्थिरूपेण समुपस्थितो यौगन्धरायणः 'किं क्रियताम्' इति प्रश्नमाकर्ण्य पद्मावतीं कथयति—'अहं प्रोषितभर्तृकामावन्तिकाम् पद्मावत्या परिपाल्यमानाम् किञ्चित् कालमिच्छामीति।' श्लोकेऽस्मिन् यौगन्धरायणस्तदौचित्यं प्रतिपादयति।

अन्वयः—मम, अर्थैः, नैव कार्यम्, भोगैः, अपि न, न वस्त्रैः, अहं, वृत्तिहेतोः, काषायं, न, प्रपन्नः, धीरा, दृष्टधर्मप्रचारा, इयं, कन्या, मे, भगिन्याः, चारित्रं, रक्षितुं, शक्ता।

व्याख्या—ममेति औचित्यादध्याहरणीयम्। मम=यौगन्धरायणस्य अर्थैः=धनैः, नैव कार्यम्=नैव प्रयोजनम् वर्तते। भोगैः=भोग्यार्थैर्वस्तुभिरपि न प्रयोजनम्। अहं=यौगन्धरायणः, वृत्तिहेतोः=आजीविकार्थं, काषायं=काषायवर्णयुक्तं वस्त्रं, माञ्जिष्ठमित्यर्थः। न प्रपन्नः=न स्वीकृतवान्। धीरा=पण्डिताः 'धीरो मनीषी प्राज्ञः संख्यावान् पण्डितः कविः' इत्यमरः। दृष्टः=अवगतः, धर्मस्य प्रचारो=विस्तारो गतिरिति यावत् यया सा दृष्टधर्मप्रचारा, इयं कन्या=पद्मावती, मे भगिन्याः=मम स्वसुः, चरित्रमेव चरित्रम्=चरितं शीलमिति यावत्। रक्षितुं=गोपायितुं, शक्ता=समर्था वर्तते इति शेषः। यतः कारणादियं विदुषी धर्मप्रचारबद्धादरा पद्मावती मद्भगिन्याश्चरितं रक्षितुं समर्था, तत एव कारणादहमत्रभवत्याः पद्मावत्याः सन्निधौ निक्षेप्तुमेतामिच्छामीति स्पष्टोऽर्थः। पद्मावत्याः निक्षेपरक्षणक्षमत्वस्य समर्थनादत्रार्थान्तरन्यासोऽलङ्कारः। वैश्वदेवी नामकं छन्दः। तल्लक्षणं च यथा—'पञ्चाश्वैश्छिन्ना वैश्वदेवी ममौ यौ' इति।

समासः—वृत्तेर्हेतुर्वृत्तिहेतुः तस्माद् वृत्तिहेतोः। कषायेण रक्तं वस्त्रं काषायम्। दृष्टो धर्मस्य प्रचारो यदा सा दृष्टधर्मप्रचारा॥

प्रश्नः—

सुखमर्थो भवेद् दातुं सुखं प्राणाः सुखं तपः।
सुखमन्यद् भवेत् सर्वं दुःखं न्यासस्य रक्षणम्॥ १०॥

पद्यमिदं सुस्पष्टं व्याख्यायताम्। (सन् १९७०)

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—'स्वप्नवासवदत्त' नाटकस्य प्रथमाङ्कादुद्धृते पद्येऽस्मिन् यौगन्धरायणस्ये स्वेच्छां श्रुत्वा काञ्चुकीयः कथयति—देवि, महती खल्वस्याभ्यर्थना, कथं स्वीकुर्मः। न्यासरक्षणस्य अर्थादिदानापेक्षया कष्टसाध्यत्वात्।

अन्वयः—अर्थः, दातुं सुखम्, भवेत्, प्राणाः सुखम्, तपः, सुखम्, अन्यत् सर्वं, सुखं, भवेत्, 'किन्तु' न्यासस्य, रक्षणं, दुःखम्।

व्याख्या—अर्थो=द्रव्यं, दातुम्=समर्पयितुं, सुखं यथा स्यात्तथा, भवेत्=स्यात्। प्राणाः अपि दातुं सुखम्=सरलम्। तपः=तपश्चरणस्य फलमित्यर्थः, इत्यपि दातुं सुखम्। अन्यत् सर्वमपि दातुं सुखं=अक्लेशेन भवेत्। सर्वमन्यत् सुखं भवेत् सकलं कार्यान्तरं सुकरं स्यादित्यर्थः। किन्तु न्यासस्य=निक्षेपस्य, रक्षणम्=परिपालनम्, दुःखम्=कष्टसाध्यम्भवतीत्यर्थः। अर्थप्रभृतीनां समस्तानां वस्तूनां वितरणं तावल्लोके सुकरम्, परं निक्षेपरक्षणं नाम स्वस्मिन्नुत्तरदायित्वेन सर्वथा दुष्करमेवेत्यमुष्मिन् दुष्करे कर्मणि कथमिदानीं प्रवर्तितव्यमस्माभिरिति काञ्चुकीयवचसोऽभिप्रायः। अत्रार्थान्तरन्यासोऽलङ्कारः। अनुष्टुप् छन्दः॥

प्रश्नः—

पद्मावती नरपतेर्महिषी भवित्री
दृष्टा विपत्तिरथ यैः प्रथमं प्रदिष्टा।
तत्प्रत्ययात् कृतमिदं न हि सिद्धवाक्या-
न्युत्क्रम्य गच्छति विधिः सुपरीक्षितानि॥ ११

श्लोकोऽयं सन्दर्भप्रसङ्गान्वयादिपुरस्सरं संस्कृतगिरा सुस्पष्टं व्याख्येयः। (सन् १९६७, ६९)

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—'स्वप्नवासवदत्त' नाटकस्य प्रथमाङ्कादुद्धृते पद्येऽस्मिन् यौगन्धरायणः पद्मावत्या आवन्तिकापरिपालनस्वीकारानन्तरं हर्षितः सन् आत्मगतं कथयति पद्मावतीति। यौगन्धरायणो विश्वसिति यत् साम्राज्यलाभे आवन्तिकायाः पद्मावतीसकाशे न्यासरूपेण स्थापनं सहायकमेव, पुनश्च साम्राज्यलाभानन्तरं उदयनाय आवन्तिकासमर्पणकाले तच्चारित्रविषये

मगधराजपुत्री पद्मावती साक्षिणी भविष्यति, यतो हि पद्मावती उदयनस्य पत्नी भविष्यतीति सिद्धैः पूर्वमेव भणितम्, अत एवेयं हर्षोक्तिः ।

अन्वयः--पद्मावती, नरपतेः, महिषी, भवित्री, अथ, यैः, विपत्तिः, प्रथमं, प्रदिष्टा, तत्प्रत्ययात्, इदं, कृतम्, हि, सुपरीक्षितानि, सिद्धवाक्यानि, उत्क्रम्य, विधिः, न, गच्छति ॥

व्याख्या--पद्मावती=मगधराजपुत्री, नरपतेः=राज्ञ उदयनस्य, महिषी=कृताभिषेका पत्नी 'कृताभिषेका महिषी' इत्यमरः । भवित्री=भाविनी । अथ यैः=पुष्पकभद्रादिभिः सिद्धैः, विपत्तिः=राज्यस्खलनरूपा आपत्तिः, प्रथमं=पूर्वं, प्रदिष्टा=सूचिता । अपरञ्च अस्माभिः सत्यत्वेन परिणता विपत्तिर्दृष्टा । तत्प्रत्ययात्=तेष्वादेशिकेषु प्रत्ययात्=विश्वासात्, अस्माभिः, इदं=आवन्तिकायाः वासवदत्तायाः पद्मावत्याः हस्ते निक्षेपरूपं कार्यम्, कृतम्=अनुष्ठितम्, हि=यतः सुपरीक्षितानि=सुविवेचितानि, सम्यक् परीक्षितानि, सिद्धानां=दैवज्ञानां वाक्यानि=उक्तीः, उत्क्रम्य=उल्लङ्घ्य, विधिः=भागधेयं, न=नहि, गच्छति=याति । काव्यलिङ्गमलङ्कारः, वसन्ततिलका वृत्तम् ॥

समासः--तेषु प्रत्ययः तत्प्रत्ययस्तस्मात् तत्प्रत्ययात् । सुष्ठु परीक्षितानि सुपरीक्षितानि । सिद्धानां वाक्यानि सिद्धवाक्यानि ॥

प्रश्नः--

विस्रब्धं हरिणाश्चरन्त्यचकिता देशागतप्रत्ययाः
　　वृक्षाः पुष्पफलैः समृद्धविटपाः सर्वे दयारक्षिताः ।
भूयिष्ठं कपिलानि गोकुलधनान्यक्षेत्रवत्यो दिशो
　　निःसन्दिग्धमिदं तपोवनमयं धूमो हि बह्वाश्रयः ॥ १२

पद्यमिदं प्रसङ्गादिनिर्देशपुरस्सरं संस्कृतगिरा सुस्पष्टं व्याख्येयम् ।
(१९७९)

उत्तरम्--सन्दर्भः प्रसङ्गनिर्देशश्च--'स्वप्नवासवदत्त' नाटकस्य प्रथमाङ्कादुद्धृते पद्येऽस्मिन् कविः तपोवने वत्सदेशान्तर्गतलावाणकग्रामस्य कस्यचिद् ब्रह्मचारिणः प्रवेशं वर्णयति । सः मध्याह्नसमये विश्रामाय स्थानमन्वेषयति ।

वेदपठनार्थी ब्रह्मचारी पुरतश्च हरिणान् वृक्षादीव दृष्ट्वा तपोवनमिदं वर्तत इति निश्चयं विधाय प्रविशति, कथयति च विस्रब्धमिति ।

**अन्वयः**—देशागतप्रत्ययाः, अचकिताः, हरिणाः, विस्रब्धं, चरन्ति । सर्वे वृक्षाः, दयारक्षिताः, पुष्पफलैः, समृद्धविटपाः, सन्ति । कपिलानि, गोकुलधनानि, भूयिष्ठम्, सन्ति, दिशः, अक्षेत्रवत्यः, सन्ति, इदं, निःसन्दिग्धं, तपोवनम्, हि, अयं, धूमः, बह्वाश्रयः, प्रसरति ।

**व्याख्या**—देशागतप्रत्ययाः = देशे = प्रदेशविषये आगतः = प्राप्तः प्रत्ययः = विश्वासो येषां ते देशागतप्रत्ययाः । अत एव अचकिताः = भयरहिताः, हरिणाः = मृगाः, विस्रब्धं = निश्शङ्कं यथा स्यात्तथा, चरन्ति = इतस्ततः पर्यटन्ति । सर्वे: = सकलाः, वृक्षाः = पादपाः, दयारक्षिताः = दयया = अनुकम्पया रक्षिताः = पालिताः । पुष्पैः = कुसुमैः, फलैः = सस्यैश्च समृद्धाः = सम्पन्नाः विटपाः = शाखाः येषां ते समृद्धविटपाः सन्ति । कपिलानि = पिङ्गलवर्णानि 'कडारः कपिल पिङ्ग-पिशङ्गौ' इत्यमरः । गवां = धेनूनां, कुलानि = यूथानि तानीव धनानीति गोकुल-धनानि । भूयिष्ठं = प्रचुरं वाहुल्येन, सन्ति 'दृश्यन्तेऽत्रप्रदेशे' इति शेषः । दिशः = कुकुभः, न क्षेत्र वत्यः अक्षेत्र वत्यः = क्षेत्र परिहीनास्सन्तीति शेषः । प्रान्तभूमिषु क्षेत्राण्यप्यभविष्यन् । यतो हि तपस्विनो यत् किञ्चित् फलं स्वयमेवोत्पद्यते तदेव खादन्ति, ग्रामीणास्तु बीजावापं कृत्वा जीविकां कुर्वन्तीत्यर्थः । इदम् = पुरतो दृश्यमानं, निःसन्दिग्धम् = सन्देहरहितं, सुनिश्चितमिति यावत् तपोवनम् = अस्तीति शेषः । हि = यतः, अयं = दृश्यमानः धूमः बह्वाश्रयः = बहव आश्रयाः = उत्पत्तिस्थलानि यस्य सः बह्वाश्रयः प्रसरति । अस्य धूमस्य बहुस्थानेभ्य उद्गमः स्थाने-स्थाने यज्ञारम्भं सूचयति । यत्र तत्र यज्ञप्रवर्तनाच्च सुनिश्चितमिदं तपोवन-मिति भावः । अनुमानालङ्कारः, शार्दूलविक्रीडितं वृत्तम् ॥

**समासः**—देशे देशाद्वा आगतः प्रत्ययो येषां ते देशागतप्रत्ययाः । न चकिता अचकिताः । पुष्पाणि च फलानि च पुष्पफलानि तैः पुष्पफलैः । दयया रक्षिताः दयारक्षिताः । समृद्धाः विटपाः येषान्ते समृद्धविटपाः । गवां कुलानि गोकुलानि गोकुलान्येव धनानीति गोकुलधनानि । क्षेत्राणि सन्ति यासु ताः क्षेत्रवत्यः, न क्षेत्रवत्यः अक्षेत्रवत्यः । बहवः आश्रयाः यस्यासौ बह्वाश्रयः ॥

प्रश्न:—

नैवेदानीं तादृशाश्चक्रवाकाः
नैवाप्यन्ये स्त्रीविशेषैर्वियुक्ताः ।
धन्या सा स्त्री यां तथा वेत्ति भर्ता
भर्तृस्नेहात् सा हि दग्धाप्यदग्धा ।। १२

श्लोकोऽयं सन्दर्भान्वयादिपुरस्सरं संस्कृतगिरा सुस्पष्टं व्याख्येयः ।

उत्तरम्–सन्दर्भः प्रसङ्गनिर्देशश्च—'स्वप्नवासवदत्त' नाटकस्य प्रथमाङ्कादुद्धृते पद्येऽस्मिन् कविः ब्रह्मचारियौगन्धरायणयोर्वार्तालापं वर्णयति । तत्र लावाणकग्रामाग्निकाण्डनाटकानन्तरं तपोवने समागतो ब्रह्मचारी वासवदत्ताम्प्रति राज्ञ उदयनस्य स्नेहातिशयं राज्ञःस्थितिं च प्रकटयन् वक्ति—नैवेदानीमिति ।

अन्वयः—इदानीम्, चक्रवाकाः, तादृशाः, नैव, स्त्रीविशेषैः, वियुक्ताः, अन्येऽपि, नैव । सा, स्त्री; धन्या, यां, भर्ता, तथा, वेत्ति । हि, भर्तृस्नेहात्, सा, दग्धाऽपि, अदग्धा एव ।

व्याख्या—इदानीम् = अधुना, चक्रवाकाः = कोकाःपक्षिविशेषाः, तादृशाः = उदयनसदृशाः दुःखयुक्ताः नैव वर्तन्ते । विरहदुःखे सः विरहदुःखप्रसिद्धान् चक्रवाकानप्यतिशेते । स्त्रीविशेषैः = स्त्रीरत्नैः, सौन्दर्यादिगुणसम्पदाविशिष्टैः स्त्रीभिः, वियुक्ताः=विरहिताः, अन्येऽपि=इतिहासपुराणप्रसिद्धाः दुष्यन्तादयो जनास्तादृशाः नैव वर्तन्ते । तानपि दुःखे सोऽतिशेते । सा स्त्री = नारी, धन्या = सुभगा, यां भर्ता = स्वामी, तथा = तादृशरूपेण वेत्ति = स्मरति । हि = निश्चयेन भर्तृस्नेहात् = भर्तुः = पत्युः, स्नेहात् = प्रणयात् हेतोः, सा दग्धा अपि अदग्धा = मृता अपि अमृता एव वर्तत इति शेषः । पत्युरतिशयप्रीतिपात्रं स्त्री नूनं कृतकृत्येति प्रियप्रेमसर्वस्वभूता विशिष्टस्त्रीषु गमनीया सेयं वासवदत्ता वह्नौ पाञ्चभौतिकं शरीरं त्यक्त्वापि प्रियतमेन प्रदत्तं प्रेमरूपं शरीरान्तरं धारयन्ती साम्प्रतमपि जीवतीत्येवेति भावः । प्रसिद्धानां चक्रवाकादीनामुपमानानामुपमेयत्वप्रतिपादनात् पूर्वार्द्धे प्रतीपमलङ्कारः । उत्तरार्द्धे विरोधाभासालङ्कारः । शालिनीवृत्तम् ।

समासः—भर्तुः स्नेहः भर्तृस्नेहस्तस्माद् भर्तृस्नेहात् । न दग्धा अदग्धा ।

प्रश्नः—

अनाहारे तुल्यः प्रततरुदितक्षामवदनः
शरीरे संस्कारं नृपतिसमदुःखं परिवहन् ।
दिवा वा रात्रौ वा परिचरति यत्नैर्नरपतिम्
नृपः प्राणान् सद्यस्त्यजति यदि तस्याऽप्युपरमः ॥ १४ ॥

पद्यमिदं सप्रसङ्गं सर्ववैशिष्ट्यं संस्कृतव्याख्यया स्फुटीक्रियताम् ।
( १९६९, ७७, ८२ )

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—'स्वप्नवासवदत्त' नाटकस्य प्रथमाङ्कादुद्धृते पद्येऽस्मिन् यौगन्धरायणब्रह्मचारिणोर्वार्ताप्रसङ्गे यौगन्धरायणस्य 'अस्ति कश्चिद् यत्नवानमात्यः राजानं प्रकृतौ स्थापयितुमिति' प्रश्ने ब्रह्मचारिणा सूचितम् यद् रुमण्वान् नामाऽमात्यः प्रयत्नशीलस्तं पर्यवस्थापयितुमिति । पुनश्च सः रुमण्वतः स्थितिं वर्णयति ।

अन्वयः—अनाहारे, तुल्यः, प्रततरुदितक्षामवदनः, नृपतिसमदुःखं, शरीरे संस्कारं, परिवहन्, यत्नैः, दिवा वा, रात्रौ वा, नरपतिं, परिचरति, यदि, नृपः सद्यः, प्राणान्, त्यजति, तस्याऽपि उपरमः ।

व्याख्या—स हि रुमण्वाम् अनाहारे=अनशने, तुल्यः=उदयनसदृशः । यथा राज्ञः दुःखितस्य भोजनेऽरुचिरस्तीति भावः । प्रततं=सततं रुदितेन=रोदनेन, क्षामं=क्षीणं निष्प्रभमित्यर्थः वदनं=मुखं यस्य सः प्रततरुदितक्षामवदनः नृपतिना=राज्ञा उदयनेन, समं=सदृशं दुःखं=दुःखपूर्वकं, यस्मिन्—तत् नृपतिसमदुःखम् । शरीरे=देहे, संस्कार=मार्जनं, स्नानवस्त्रादिजन्यस्वच्छतामित्यर्थः । 'संस्कारो मार्जनं मृजा' इत्यमरः । परिवहन्=धारयन्, यत्नैः=प्रयत्नैः, दिवा वा रात्रौ वा, दिवेत्यव्ययं दिनवाचि 'दिवाऽह्नीति' इत्यमरः । वा शब्दश्चार्थे नकारार्थस्तु समुच्चयः, अहर्निशमित्यर्थः । नरपतिं=भूपतिं, परिचरति=निषेवते । यदि नृपः=उदयनः, सद्यः=सपदि प्राणान्=असून्, त्यजति=जहाति तदा तस्य=रुमण्वतः अपि उपरमः=मृत्युर्भविष्यतीति शेषः । स तु सर्वात्मनेव राजानमनुसरतीति भावः । अत्र शिखरिणी वृत्तम् । तल्लक्षणञ्च—'रसैरुद्रैश्छिन्ना यमनसभलागः शिखरिणी' इति ॥

समासः—न आहारः अनाहारस्तस्मिन् अनाहारे। प्रततं यद् रुदितं तेन क्षामं वदनं यस्याऽसौ प्रततरूदितक्षामवदनः। नृपतिना समं दुःखं यस्मिन् तत् नृपतिसमदुःखम्। नराणां पतिः नरपतिस्तं नरपतिम्।

प्रश्नः—

सविश्रमो ह्ययं भारः प्रसक्तस्तस्य तु श्रमः।
तस्मिन् सर्वमधीनं हि यत्राधीनो नराधिपः॥ १५॥

श्लोकोऽयं सप्रसङ्गं सुस्पष्टं व्याख्येयः।

उत्तरम्–सन्दर्भः प्रसङ्गनिर्देशश्च—'स्वप्नवासवदत्त' नाटकस्य प्रथमाङ्कादुद्धृते श्लोकेऽस्मिन् रुमण्वतः कार्यं राज्ञः परिचर्यां ब्रह्मचारिमुखात् श्रुत्वा यौगन्धरायणस्यात्मगतोक्तिः।

अन्वयः—हि, अयं, भारः, सविश्रामः, तस्य, तु, श्रमः, प्रसक्तः। हि, यत्र, नराधिपः, अधीनः, तस्मिन् सर्वम् अधीनम्, अस्ति।

व्याख्या—हि=निश्चयेन अयं भारः=वासवदत्तासंरक्षणरूपो मया धृतो भारः, सविश्रमः=विश्रमेण=विरामेण विश्रान्त्या सहितः=युक्त एवाऽस्ति। पद्मावत्याः समीपे वासवदत्तानिक्षेपादिदानीं भारस्याऽस्य मन्मूर्धानमधिरूढस्य वासवदत्तापरिपालनरूपस्य नूनं विश्रान्तिर्जातेति भारापगमान्निर्वृत्तोऽहमस्मीति भावः। तस्य=रुमण्वतस्तु, श्रमः=नराधिपरक्षणलक्षणः परिश्रमः प्रसक्तः=प्रकर्षेण=विशेषेण सक्तो लग्नः विशेषरूपेण स्थितोऽस्तीति यावत्। हि=यतः यत्र=यस्मिन् नराधिपः=राजा अधीनः=स्वायत्तः, तस्मिन् सर्वमधीनम्=सकलमायत्तम् अस्तीति शेषः। राज्ञ उदयनस्य जीवनभारं यो वहति, सः वस्तुतः समस्तमपि अस्य कार्यजातस्य भारं वहतीति भावः। अत्र अर्थान्तरन्यासोऽलङ्कारः। अनुष्टुब्वृत्तम्।

समासः—विश्रमेण सहितः सविश्रमः : प्रकर्षेण सक्तः प्रसक्तः। नराणामधिपो नराधिपः।

प्रश्नः—

खगाः वासोपेताः सलिलमवगाढो मुनिजनः
प्रदीप्तोऽग्निर्भाति प्रविचरति धूमो मुनिवनम्।

परिभ्रष्टो दूराद्रविरपि च संक्षिप्तकिरणो
रथं व्यावर्त्यासौ प्रविशति शनैरस्तशिखरम् ॥ १६ ॥

पद्यमिदं सप्रसङ्ग व्याख्येयम्। ( सन् १९८३ )

उत्तरम्-सन्दर्भः प्रसङ्गनिर्देशश्च—'स्वप्नवासवदत्त' नाटकस्य प्रथमाङ्कादुद्धृते पद्येऽस्मिन् कविः काञ्चुकीयमुखेन सन्ध्याकालीनं दृश्यं वर्णयति।

अन्वयः—खगाः, वासोपेताः, मुनिजनः, सलिलम्, अवगाढः, प्रदीप्तः, अग्निः, भाति, धूमः, मुनिवनम्, प्रविचरति, दूरात्, परिभ्रष्टः, असौ, रविः, अपि, संक्षिप्तकिरणः, रथं, व्यावर्त्य, शनैः, अस्तशिखरम्, प्रविशति ॥

व्याख्या—खगाः=पक्षिणः, वासं=नीडम्, उपेताः=प्राप्ताः। मुनिजनः =तापसलोकः, सलिलम्=जलाशयजलम् 'सलिलं कमलं जलम्' इत्यमरः। अवगाढः=प्रविष्टः स्नानार्थमित्यर्थः। प्रदीप्तः=प्रकाशपूर्णः प्रज्वलितः, अग्निः =यज्ञाऽग्निः, भाति=प्रकाशते। धूमः=होमजन्यः मुनिवनम्=मुनीनां वनम् मुनिवनम्=तापसाश्रमम्, तपोबनमित्यर्थः। प्रविचरति=व्याप्नोति। दूरात्= दूरप्रदेशात्, दूरवर्तिनो गगनतलादित्यर्थः। परिभ्रष्टः=पतितः अस्ताचलसमीपं गत इति यावत्। असौ=गगनगतः, रविः=सूर्यः अपि, संक्षिप्तकिरणः= संक्षिप्ताः=उपसंहृताः सङ्कोचिताः किरणाः=मरीचयो येन सः संक्षिप्तकिरणः= नन्दीकृतकरः सन्नित्यर्थः। रथं व्यावर्त्य=वेगवतीं रथस्य गतिं निरुध्येत्यर्थः। शनैः=क्रमेण अस्तशिखरम्=अस्ताचलचूडां, प्रविशति=गाहते। अत्र च पद्ये पक्षिणां नीडप्रवेशनादिभिर्हेतुभिः सन्ध्यासमयस्याऽनुमानात्तस्य च सहृदयाकर्षकत्वेन अनुमानालङ्कारः। स चाऽत्र शब्दानुपात्ततया व्यञ्जनावृत्त्या वेदितव्यः। शिखरिणीवृत्तम्।

समासः—खे गच्छन्तीति खगाः। वासम् उपेताः वासोपेताः। मुनय एव जनः मुनिजनः। मुनीनां वनं मुनिवनम्। संक्षिप्ताः किरणा येनऽसौ सङ्क्षिप्तकिरणः ॥

॥ इति प्रथमोऽङ्कः ॥

## द्वितीयतृतीयाङ्कयोः श्लोकाः न सन्ति।

## चतुर्थोऽङ्कः

प्रश्नः—

कामेनोज्जयिनीं गते मयि तदा कामप्यवस्थां गते
दृष्ट्वा स्वैरमवन्तिराजतनयां पञ्चेषवः पातिताः।
तैरद्यापि सशल्यमेव हृदयं भूयश्च विद्धा वयं
पञ्चेषुर्मदनो यथा कथमयं षष्ठः शरः पातितः ॥ १ ॥

श्लोकोऽयं सप्रसङ्गं व्याख्येयः। (१९८२)

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—'स्वप्नवासवदत्त' नाटकस्य चतुर्था-ङ्कादुद्धृते श्लोकेऽस्मिन् कविः राज्ञ उदयनस्य वासवदत्तायां प्रेमातिशयं पद्मावत्या-मपि स्नेहातिशयात्तस्याः दर्शनौत्सुक्यं च वर्णयति।

अन्वयः—तदा, मयि, उज्जयिनीं, गते सति, अवन्तिराजतनयां, स्वैरं, दृष्ट्वा, कामप्यवस्थां गते सति, कामेन, पञ्चेषवः, पतिताः, तैः, अद्यापि, हृदयम्, सशल्यमेव 'अस्ति', भूयश्च, वयं कामेन, विद्धाः। यदा, मदनः, पञ्चेषुः 'एव कथ्यते' तदा, अयं, षष्ठः, शरः, कथम्, पातितः ?

व्याख्या—तदा=प्रद्योतनृपतेः सचिवेन कृतस्य मे ( उदयनस्य ) निग्रहस्य समये, मयि=राज्ञि उदयने, उज्जयिनीं=प्रद्योतराजधानीं, गते सति=तत्र निवसति सति, अवन्तिराजस्य=प्रद्योतमहासेनस्य तनयां=पुत्रीं वासवदत्तां स्वैरं=यथेच्छं, दृष्ट्वा=अवलोक्य, कामप्यवस्थाम्=अनिर्वचनीयामवस्थां गते =प्राप्ते सति, कामेन=मनोभवेन, पञ्चेषवः=पञ्चबाणाः—

'अरविन्दमशोकञ्च चूतञ्च नवमल्लिका।
नीलोत्पलञ्च पञ्चैते पञ्चबाणस्य सायकाः ॥'

पातिताः=निक्षिप्ताः, तैश्च=कामपातितैर्बाणैः अद्यापि, मम हृदयं सशल्यम्=शल्येन=कीलकेन सहितम्=युक्तमेवास्ति। भूयश्च=पुनरपि च वयं कामेन स्वकीयैर्बाणैः पद्मावतीमुद्दिश्य विद्धाः=ताडिताः पुनरपि पद्मावतीं विषयीकृत्याऽहं ताडितोऽस्मीति भावः। यदा मदनः=मनोभवः, पञ्चेषुः=पञ्च इषवः=सायका यस्य सः पञ्चेषुरेव कथ्यते तदा अयं षष्ठः=षष्ठसंख्याकः शरो=बाणः कथम्=

कुतः पातितः=प्रक्षिप्तः। उपरतायामपि वासवदत्तायां प्रेमातिशयो द्योत्यते। वस्तुतस्तु—पञ्चबाणपदे पञ्चपदो विस्तारवचनः। परप्रेमास्पदवासवदत्तावियोग-वैश्वानरोऽद्यापि ज्वलयत्येव माम्। पुनरियमपरापि पद्मावतीविषयिण्युत्कटोत्कण्ठा सम्प्रत्यतीव व्याकुलीकरोति मे मानसम्। अहो! दुर्दैवान्महति सङ्कटे सम्पतितो-ऽस्मीति चिन्ताभावमन्तर्नाटयति राजा। अत्र शार्दूलविक्रीडितं वृत्तम्।

**समासः**—अवन्तिराजस्य तनया अवन्तिराजतनयातां अवन्तिराजतनयाम्। शल्येन सहितं सशल्यम्। पञ्च इषवो यस्य सः पञ्चेषुः॥

**प्रश्नः**—

ऋज्वायतां च विरलां च नतोन्नतां च
सप्तर्षिवंशकुटिलां च निवर्तनेषु।
निर्मुच्यमानभुजगोदरनिर्मलस्य
सीमामिवाम्बरतलस्य विभज्यमानाम्॥ २॥

श्लोकोऽयं सप्रसङ्गं सुस्पष्टं व्याख्येयः।

( सन् १९६५, ६७, ६९, ७८, ८३ )

**उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च**—'स्वप्नवासवदत्त' नाटकस्य चतुर्था-ङ्कादुद्धृते श्लोकेऽस्मिन् कविर्वर्णयति यद् यदा विदूषक ऊर्ध्वमवलोक्य राजानमु-दयनं प्रति कथयति यत् 'श्रीमन्! पश्येनां सारसपंक्तिम्' तदा राजा सारसपङ्क्ति-मुद्दिश्य वक्ति—वयस्य! पश्याम्यहं त्वत्सूचितां सारसपंक्तिमिमाम् गगनाङ्गणे। तामेव वर्णयितुं विशिनष्टि राजा—ऋज्वायतामिति पद्येन॥

**अन्वयः**—(वयस्य!) ऋज्वायताम् च, विरलाम् च, नतोन्नताम् च, निवर्तनेषु सप्तर्षिवंशकुटिलाम् च, निर्मुच्यमानभुजगोदरनिर्मलस्य, अम्बरतलस्य, सीमामिव विभज्यमानाम्, एनाम्, पश्यामि।

**व्याख्या**—वयस्य!=मित्र!, ऋजुः=सरला, आयता=दीर्घा च ऋज्वा-यता ताम् ऋज्वायताम्=सरलदीर्घाम् घनामिति यावत्। च। विरलाञ्च= क्वचन मध्ये स्थिताम्। नता=निम्नीभूता उन्नता=उच्चैःभूता च ताम् नतोन्न-ताम्=वसुन्धरां नीचोच्चप्रदेशेषु विद्यमानाम्। निवर्तनेषु=वामदक्षिणयोस्तिर्यग्

विचलनेषु घूर्णनेष्विति यावत् । सप्तर्षिवंशकुटिलाम्=सप्त च ते ऋषयश्च सप्तर्षयः=मरीचिरङ्गिरसेत्यादयः । 'मरीचिरङ्गिरा अत्रिः पुलस्त्यः पुलहः क्रतुः । वशिष्ठश्चेति सप्तैते ज्ञेयाश्चित्रशिखण्डिनः ॥' तेषां सप्तर्षीणां वंशः=समूहः तदाख्यतारकगणः तदिव कुटिलाम्=वक्राकारेण स्थिताम् । निर्मुच्यमानः=मुच्यमानकञ्चुकः कञ्चुकहीन इति यावत्, यो भुजगः=सर्पः तस्य उदरम्=उदकमिवनिर्मलम्=स्वच्छमतीव धवलमिति यावत्, तस्य निर्मुच्यमानभुजगोदरनिर्मलस्य । अम्बरतलस्य=गगनाङ्गणस्य, आकाशतलस्येति यावत् । विभज्यमानाम्=घनविरलत्वादिरूपेण पार्थक्यं दर्शयन्तीं, सीमामिव=मर्यादारेखामिव, एनां पश्यामि इत्यनेन सहान्वयः । पूर्वार्द्धे स्वभावोक्तिरुत्तरार्द्धे चोत्प्रेक्षालङ्कारः । अत्र वसन्ततिलकावृत्तम् ॥

**समासः**—ऋजुश्च आयता च ऋज्वायता ताम् ऋज्वायताम् । ऋज्वी चासौ आयता च ऋज्वायता ताम् ऋज्वायताम् । नता च उन्नता च नतोन्नता तां नतोन्नताम् । सप्त च ते ऋषयश्च सप्तर्षयः, सप्तर्षीणां वंशः सप्तर्षिवंशः, सप्तर्षिवंश इव कुटिला, सप्तर्षिवंशकुटिला ताम् सप्तर्षिवंशकुटिलाम् । निर्मुच्यमानो यो भुजगस्तस्य उदरमिव निर्मलं निर्मुच्यमानभुजगोदरनिर्मलम्, तस्य निर्मुच्यमानभुजगोदरनिर्मलस्य । अम्बरस्य तलम् अम्बरतलम् तस्य अम्बरतलस्य ॥

**प्रश्नः**—

मधुमदकला मधुकरा मदनार्ताभिः प्रियाभिरुपगूढाः ।
पादन्यासविषण्णा वयमिव कान्तावियुक्ताः स्युः ॥ ३ ॥

श्लोकोऽयं सप्रसङ्गं सुस्पष्टं व्याख्येयः । (सन् १९७०)

**उत्तरम्**—सन्दर्भः प्रसङ्गनिर्देशश्च—'स्वप्नवासवदत्त' नाटकस्य चतुर्थाङ्कादुद्धृते श्लोकेऽस्मिन् माधवीलतामण्डपे राज्ञ उदयनस्य प्रवेशावसरे विदूषकः कथयति—'दास्याः पुत्रैर्मधुकरैःपीडितोऽस्मी'ति । इति श्रुत्वा उदयनः कथयति—मधुमदकलेति ।

**अन्वयः**—मधुमदकलाः, मदनार्ताभिः, प्रियाभिः, उपगूढाः, मधुकराः, पादन्यासविषण्णाः, वयमिव, कान्तावियुक्ताः, स्युः ।

व्याख्या—मधुमदकलाः=मधुनः=पुष्परसस्य 'मद्यमद्येपुष्परसे' इत्यमरः यो मदः=पुष्परसपान जन्मा मानसो विकारविशेषः। तेन कलाः=अव्यक्त-मधुराः, अव्यक्तमधुरं यथा तथा कूजन्त इति यावत्। मदनार्ताभिः=मदनेन=मन्मथेन, आर्ताभिः=पीडिताभिः, कामाकुलाभिरिति यावत्। प्रियाभिः=भ्रमरीभिः उपगूढाः=आलिङ्गिताः, 'ध्वनौ तु मधुरास्फुटे कलः' इत्यमरः। मधुकराः=द्विरेफाः, अस्माकम्, पादन्यासविषण्णाः=पादन्यासेन=पादक्षेपेण, विषण्णाः=खिन्नाः सन्त इति शेषः। वयमिव=यथा अहमुदयनस्तथैव, कान्ताः=प्रियास्ताभिर्वियुक्ताः=विरहिता, स्युः=भवेयुः। भ्रमरैस्तावत् सम्प्रति प्रिया-सहचरैर्मकरन्दास्वादमग्नैरमन्दानन्दसन्दोहः समनुभूयते मञ्जुगुञ्जद्भिः। कुञ्जे च करिष्यमाणः प्रवेशोऽस्मदीयोऽयं नूनं ततः सम्भ्रमादितस्ततो भविष्यतो भ्रमरा-न्प्रियाभिर्वियोजयेत्। इत्थं सति अहमिव ते वियोगवैकल्यं प्राप्स्यन्ति। न चैतत् कर्तुमुत्सहे पुनर्वियोगमहिमानं पूर्णतया जानान्निति भावः। अत्र 'वयमिवे'त्यनेन विरहस्य दुःसहत्वं सूचयतो वत्सराजस्योदयनस्य वासवदत्ताविषयो हृद्गतः परतरो विषादभावः सुविशदं व्यक्ततां नीतः। एतेन—कार्यगौरवात् प्रियां नूतनां परिणीतवतोऽपि राज्ञः प्रेम वासवदत्तायां पद्मावत्यपेक्षया विशिष्टं दर्शितम्। अत्रोपमाऽलङ्कारः। पद्येऽस्मिन्नार्या वृत्तम्। तल्लक्षणञ्च—'यस्याः प्रथमे पादे द्वादशमात्रास्तथा तृतीतेऽपि अष्टादश द्वितीये चतुर्थके पञ्चदश सार्या' इति।

समासः—मधुनो यो मदस्तेन कलाः मधुमदकलाः। मधु कुर्वन्तीति मधुकराः। मदनेन आर्त्ताः मदनार्त्तास्ताभिः मदनार्त्ताभिः। पादानां न्यासः पादन्यासः, पादन्यासेन विषण्णाः पादन्यासविषण्णाः। कान्ताभिर्वियुक्ताः कान्तावियुक्ताः॥

प्रश्नः—

पद्मावती बहुमता मम यद्यपि रूपशीलमाधुर्यैः।
वासवदत्ताबद्धं न तु तावन्मे मनो हरति॥ ४॥

श्लोकोऽयं सप्रसङ्गं सुस्पष्टं व्याख्येयः।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—'स्वप्नवासवदत्त' नाटकस्य चतुर्थाङ्कादुद्धृते श्लोकेऽस्मिन् उदयनः पद्मावतीं प्रतीक्षन् विदूषकेन सह विविधां वार्तां कुर्वन् तेन पृष्टः वासवदत्तापद्मावत्योः प्रेमाधिक्यक्रमं प्रतिपादयति।

**अन्वयः**—रूपशीलमाधुर्यैः, यद्यपि, पद्मावती, मम, बहुमता, 'तथापि' 'सा' वासवदत्ताबद्धं मे, मनः, तु, तावत्, न, हरति ॥

**व्याख्या**—रूपम्=सौन्दर्यम्, च, शीलम्=सच्चरितं च, माधुर्यम्=प्रियभाषिता च रूपशीलमाधुर्यम् तैः रूपशीलमाधुर्यैः=सौन्दर्यचरित्रप्रियभाषित्वादिभिर्गुणैः, यद्यपि, पद्मावती=तन्नाम्नी नायिका, मम=मे, बहुमता=बहुमानास्पदं, वर्तते, तथापि, सा=पद्मावती, वासवदत्ताबद्धं=वासवदत्तयाऽतीतया प्रणयिन्या बद्धं=स्वगुणैराकृष्टं, मे मनः=मदीयं मानसं तु, तावत्, न हरति=नैव चोरयति। स्वोन्मुखं न करोतीति यावत्। पद्मावत्याः सौन्दर्यादिगुणेषु लुब्धोऽहं तत्र सखे! बहुमानं वहामि, परं वासवदत्ताप्रीतिपाशविवशं मे मनस्तथा हर्तुं न शक्यते कथमपीत्यर्थः अत्राऽऽर्यावृत्तम् ॥

**समासः**—रूपञ्च शीलञ्च माधुर्यञ्चेति रूपशीलमाधुर्यम् तैः रूपशीलमाधुर्यैः। वासवदत्तया बद्धं वासवदत्ताबद्धम् ॥

**प्रश्नः**—

अनेन परिहासेन व्याक्षिप्तं मे मनस्त्वया।
ततो वाणी तथैवेयं पूर्वाभ्यासेन निःसृता ॥ ५ ॥

श्लोकोऽयं सप्रसङ्गं सुस्पष्टं व्याख्येयः। (सन् १९५६)

**उत्तरम्**—**सन्दर्भः प्रसङ्गनिर्देशश्च**—'स्वप्नवासवदत्त' नाटकस्य चतुर्थाङ्कादुद्धृते श्लोकेऽस्मिन् कविर्वर्णयति यद् विदूषकेन राज्ञ उदयनस्य समक्ष वासवदत्तागुणप्रकाशनकाले 'सर्वमेतत् कथयिष्ये देव्यै वासवदत्तायै' इत्युक्तवति वासवदत्तापक्षपातहृदये राज्ञि उदयने वासवदत्तानिधनविषये विदूषकेन स्मारितो राजा दुःखितः सन् वक्ति—अनेनेति।

**अन्वयः**—अनेन, परिहासेन, मे, मनः, व्याक्षिप्तम्, ततः, इयं, वाणी पूर्वाभ्यासेन, तथैव, निःसृता ॥

**व्याख्या**—अनेन=पूर्वोक्तेन 'वासवदत्ता पद्मावती वा प्रिये' त्येवंरूपेण परिहासेन=सलीलवचसा त्वया=विदूषकेन, मे मनः=मदीयं चेतः, व्याक्षिप्तम् =मुग्धतां नीतम् चञ्चलीकृतमिति यावत्। ततः=तस्मात् कारणात्, मुग्धत्वा-

द्धेतोरित्यर्थः। इयं वाणी='सर्वमेतत् कथयिष्ये देव्यै वासवदत्तायै' इत्येवंरूपा, पूर्वाभ्यासेन=प्राक्कालिकसंस्कारबलात्, निःसृता=निर्गता, मन्मुखादिति शेषः। प्रियाप्रीतितारतम्यरूपं त्वदुक्तं सलीलं वचनं निशम्य प्रमुदितश्चपलचित्तो वासवदत्तावियुक्तमहमात्मानं विस्मृतवानस्मि। वासवदत्तायाः सत्ताकाले च त्वदीयाऽविनयादिकं तां सूचयितुं बहुशोऽभ्यस्तमासीत् पुरा। मनसो मुग्धतया हि तत्तादृक्पूर्णकालिकाभ्यासवशात्तादृगेवेदं वचनं परवशस्य मे मुखान्निःसृतं साम्प्रतम्, बुद्धिपूर्वं तु मया नोक्तमिति भावः। अनुष्टुब्वृत्तमिदम्॥

समासः—परितः हासः परिहासः। पूर्वः अभ्यासः पूर्वाभ्यासः।

प्रश्नः—

दुःखं त्यक्तुं बद्धमूलोऽनुरागः स्मृत्वा स्मृत्वा याति दुःखं नवत्वम्।
यात्रा त्वेषा यद् विमुच्येह बाष्पं प्राप्ताऽऽनृण्या याति बुद्धिःप्रसादम्॥६

पद्यमिदं सुस्पष्टं व्याख्येयम्। ( सन् १९६५, ६७, ६९, ७९ )

उत्तरम्–सन्दर्भः प्रसङ्गनिर्देशश्च—'स्वप्नवासवदत्त' नाटकस्य चतुर्थाङ्कादुद्धृते पद्येऽस्मिन् कविर्वर्णयति यद् विदूषकस्य 'धारयतु धारयतु भवान् अनतिक्रमणीयोहि विधिः ईदृशमिदानीमेतत्' इति वचनमाकर्ण्य विषादभावं नाटयन् राजा कथयति—मित्र न भवान् जानाति ममावस्थाम्। न ज्ञायते मित्र! कष्टकरी विरहावस्था मे भवता, अत एतादृशमुपदिश्यते कुतः इति कष्टकारणत्वं विवेचयन्नाह राजा—दुःखमिति।

अन्वयः—बद्धमूलः, अनुरागः, त्यक्तुं, दुःखम्, स्मृत्वा-स्मृत्वा, दुःखं, नवत्वं, याति, इह, यात्रा, तु एषा 'वर्तते' यत्—बाष्पं, विमुच्य, प्राप्तानृण्या, बुद्धिः, प्रसादं याति॥

व्याख्या—बद्धं मूलं यस्य सः बद्धमूलः=दृढः, अनुरागः=प्रियाविषयकं प्रेम, त्यक्तुम्=अपनेतुं, दुःखम्=कष्टकरम् दुःस्त्यजः। स्मृत्वा-स्मृत्वा=तत्प्रेम्णो मुहुःस्मरणेन दुःखम्=प्रियावियोगजन्यं मे कष्टं नवत्वं याति=नवमिव सम्पद्यते। कष्टं पुनः प्राक्कालिकमपि स्मृतिबलेन तात्कालिकमिव सञ्जायते इत्यर्थः। इह=प्रसङ्गेऽस्मिन्, यात्रा=गतिरुपायस्तु एषा वर्तते यद् बाष्पं=अश्रु विमुच्य=उत्सृज्य, रोदनमित्यर्थः। तेन च प्राप्तानृण्या=प्राप्तं=लब्धम् आनृण्यम्=

तत्प्रेम्णो निष्कृतिर्यया सा प्राप्तानृण्या, बुद्धिः = मनः, प्रसादं = नैर्मल्यं, शान्ति, याति = गच्छति, प्रसीदतीति यावत् । महीयान् खलु वासवदत्ताप्रणयमहिमा । विरहे च तत्स्मरणं मुहुर्दुःखमुद्बोधयति । रोदनेन हि दुःखभारो लघूभवतीति तदानीं रोदनमेव मनसश्चाञ्चलस्याकुलस्य नूनं स्थिरीकरणोपायः । अश्रुपाते सति वियोगदशावसन्नं मनः पर्याकुलं कथमपि प्रसन्नतामधिगच्छतीति भावः । शालिनी-वृत्तम् ॥

समासः—बद्धं मूलं यस्याऽसौ बद्धमूलः । नास्ति ऋणम् यस्याऽसौ अनृणः, अनृणस्य भाव आनृण्यम्, प्राप्तमानृण्यं यया सा प्राप्ताऽऽनृण्या ।

प्रश्नः—

शरच्छशाङ्कगौरेण वाताविद्धेन भामिनी ।
काशपुष्पलवेनेदं साश्रुपातं मुखं मम ॥ ७ ॥

श्लोकोऽयं सप्रसङ्गं व्याख्येयः ।

उत्तरम्–सन्दर्भः प्रसङ्गनिर्देशश्च—'स्वप्नवासवदत्त' नाटकस्य चतुर्थाङ्कादुद्धृते श्लोकेऽस्मिन् कविर्वर्णयति यद् राजा आत्मनः समीपं पद्मावतीमुपवेश्य 'मदश्रुपातकारणं तत्त्वतो विज्ञाय बालेयमीर्ष्याकषायिता कोपना सती विमनायेत, अनुक्ते च मया तत्कारणे नूनमन्यथा किमपि शङ्केत' इति कृत्वा वस्तुस्थितिं गोपयन्नश्रुपाते कारणमन्यथा निर्देशयन् वक्तुमुपक्रमते ।

अन्वयः—भामिनि ! शरच्छशाङ्कगौरेण, वाताविद्धेन, काशपुष्पलवेन, इदं, मम, मुखं, साश्रुपातं, सञ्जातम् ।

व्याख्या—भामिनि ! = अयि कोपने ! 'कोपना सैव भामिनी' इत्यमरः । अयि ! पद्मावति ! शरच्छशाङ्कगौरस्तेन = शरदि शशाङ्कः शरच्छशाङ्कः, शरच्छशाङ्क इव गौरः शरच्छशाङ्कगौरस्तेन = शारदचन्द्रवद्धवलेन । वाताविद्धेन = वातेन आविद्धो वाताविद्धस्तेन = वायुना वेल्लितेन = चालितेन · 'आविद्धं कुटिलं भुग्नं वेल्लितमि'त्यमरः । काशपुष्पलवेन = काशस्य पुष्पं काशपुष्पम्, तस्य लवः काशपुष्पलवस्तेन = काशाख्यपुष्पकणेन धूलिरूपेण नयनयोरन्तरं गतेनेति शेषः । इदम् = दृश्यमानम्, मम मुखम् = मदीयमाननम्, साश्रुपातम् = अश्रूणां पातः

अश्रुपातस्तेन सहितं साश्रुपातम्=रोदनजलोद्गमेन सहितं सञ्जातमासीदिति शेषः। अयि प्रिये! सम्प्रति मदीयाश्रुपातविषये मनस्यन्यथा किमपि शङ्कमानया न त्वया मयि कुपितया वा भाव्यम् अत्र हि प्रमदवने काशपुष्परेणवो वायुना समन्ततः क्षिप्यन्ते। त एवाऽमी मन्नयनान्तरे निपतिता अश्रूण्युद्भावयन्ति—इति भावः। अनुष्टुब्वृत्तम्।

**समासः**—शरदि शशाङ्कः शरच्छशाङ्कः, शरच्छशाङ्क इव गौरः शरच्छशाङ्कगौरः, तेन शरच्छशाङ्कगौरेण। वातेन आविद्धः वाताविद्धस्तेन वाताविद्धेन। काशस्य पुष्पम् काशपुष्पम्, तस्य लवः काशपुष्पलवस्तेन काशपुष्पलवेन। अश्रूणां पातः अश्रुपातः, तेन सहितं साश्रुपातम्।

**प्रश्नः**—

इयं बाला नवोद्वाहा सत्यं श्रुत्वा व्यथां व्रजेत्।
कामं धीरस्वभावेयं स्त्रीस्वभावस्तु कातरः॥ ८॥

श्लोकोऽयं सप्रसङ्गं व्याख्येयः।

**उत्तरम्**—सन्दर्भः प्रसङ्गनिर्देशश्च—'स्वप्नवासवदत्त' नाटकस्य चतुर्थाङ्कादुद्धृतेऽस्मिन् पद्ये राजा पद्मावतीसमक्षं 'मदश्रुपातकारणं तत्त्वतो विज्ञाय बालेयमीर्ष्याकषायिता कोपना सती विमनायेत्, अनुक्ते च मया तत्कारणे नूनमन्यथा किमपि शङ्केत' इति कृत्वा वस्तुस्थितिं गोपयन् 'शरच्छशाङ्कगौरेण' इत्यादिनाऽश्रुपाते कारणान्तरमन्यथा निर्दिश्य सत्यगोपनमन्यथाशङ्कनपरिहाराय प्रयुक्तं नवोढां पद्मावतीं प्रत्येतद् गुणायेति पुनस्तस्यौचित्यं समर्थयति।

**अन्वयः**—बाला, नवोद्वाहा, इयं, सत्यं, श्रुत्वा, व्यथां, व्रजेत्, इयं धीरस्वभावा, कामम्, तु स्त्रीस्वभावः, कातरः भवति'।

**व्याख्या**—बाला=नूतनवयाः, मुग्धेति यावत्। नवोद्वाहा=नव उद्वाहो यस्याः सा नवोद्वाहा=नवोढा, इयम्=पद्मावती, सत्यम्=रोदनस्य वास्तविककारणम्, श्रुत्वा=निशम्य, व्यथां व्रजेत्=व्यथिता=दुःखिता भवेत्। इयम्=एषा, धीरस्वभावा=धीरः=गभीरोऽचञ्चलः स्वभावः=प्रकृतिर्यस्याः सा, धीरस्वभावा, कामम्=बाढं वर्तते, तु=किन्तु, स्त्रीणां=योषिताम्, स्वभावः,

कातरः=अधीरो भवति, 'अधीरः कातरः' इत्यमरः। राजा मनसा चिन्तयति यत् 'मदीयाश्रुपातस्य प्रियतमवासवदत्तावियोगहेतुतायामाकर्णितायां नवोढया मुग्धया पद्मावत्या भृशं व्यथितचित्तया भूयेत। यद्यपि धीरयाऽनया सत्यकारण-श्रवणेऽपि सापत्न्यसहजमीर्ष्याभावं भजन्त्या विकृतचित्तया न भवितुं शक्यते, तथापि स्वभावतया स्त्रियोऽधीराः भवन्तीति तादृशी शङ्का युज्यतेऽस्यां कर्तुम्। चञ्चलं मनः सर्वेषां, विशेषवस्तु बालानाम्, तेन सा किन्नाम कदाचिन्न चिन्तयेत्। अतो मृषा तत्कारणं प्रदर्शयता युक्तमेवाऽऽचरितं मये'ति भावः। अत्राऽप्यनुष्टुब्वृत्तम्।

**समासः**—नव उद्वाहो यस्याः सा नवोद्वाहा। धीरः स्वभावो यस्याः सा धीरस्वभावा। स्त्रीणां स्वभावः स्त्रीस्वभावः।

**प्रश्नः**—

> गुणानां वा विशालानां सत्काराणां च नित्यशः।
> कर्तारः सुलभाः लोके विज्ञातारस्तु दुर्लभः॥ ९॥

श्लोकोऽयं सप्रसङ्गं सुस्पष्टश्च व्याख्येयः।

**उत्तरम्**—सन्दर्भः प्रसङ्गनिर्देशश्च—'स्वप्नवासवदत्त' नाटकस्य चतुर्थाङ्कादुद्धृते श्लोकेऽस्मिन् कविर्वर्णयति यत् श्रियते अश्रुपातस्य कारणं श्रुत्वा पद्मावत्यां नवोद्वाहजन्यविशिष्टलज्जया तत्र किञ्चिद् वक्तुमपारयन्त्यां राजनि च सरसोचितवक्तव्यानन्तरं तूष्णींभावं भजमाने विदूषको राजानं तस्मिन्नेव दिनेऽप-राह्णकाले मगधराजसहितं सुहृज्जनदर्शनं कर्तव्यमिति स्मारयति। तदेव समर्थयन् राजा ब्रूते—गुणानामिति।

**अन्वयः**—लोके, विशालानां, गुणानां, सत्काराणां, च, नित्यशः, कर्तारः, सुलभाः, विज्ञातारः, तु, दुर्लभाः, 'सन्ति'।

**व्याख्या**—अत्र वा शब्द च शब्दौ समुच्चयवाचिनौ। कर्तारो विज्ञातारश्चेति पदे द्वयोः षष्ठ्यन्तयोः सम्बध्येते। लोके=जगति, विशालानाम्=महतामुदाराणां, गुणानां=सत्काराणां, परपूजाप्रभृतीनां च, नित्यशः=सन्ततं, कर्तारः=प्रयोजकाः लोकाः, सुलभाः=सुखम्=अनायासेन लब्धुं शक्याः=ते भूयांस, सन्ति, गुणानां

सत्काराणां च विज्ञातारस्तु=सादरं तत्स्वीकर्तारः पुनः दुर्लभाः=दुःखेन लब्धुं शक्याः=विरलास्तादृशः सन्तीत्यर्थः। नित्यमुपकर्तारः सत्कर्तारश्च लोकाः स्वार्थ-प्रेरिताः बहवो दृश्यन्ते, किन्तु कृतज्ञाः सत्कारज्ञाश्च लोके स्वल्पतमा एव। अतो मगधराजपूजास्वीकरणं नाम तदीयसत्कारज्ञानरूपनिदमनायासलभ्यमन्यदुर्लभं कार्यं सम्प्रति मयाऽवश्यमेव करणीयमिति कृत्वा तत्रैव मयोपस्थातव्यमिति भावः। अनुष्टुब्वृत्तम्।

॥ इति चतुर्थोऽङ्कः ॥

## पञ्चमोऽङ्कः

प्रश्नः—

श्लाघ्यामवन्तिनृपतेः सदृशीं तनूजां
कालक्रमेण पुनरागतदारभारः।
लावाणके हुतवहेन हृताङ्गयष्टिं
तां पद्मिनीं हिमहतामिव चिन्तयामि ॥ १ ॥

पद्यमिदं सवैशिष्ट्यं संस्कृतव्याख्यया स्फुटीक्रियन्ताम्।

(१९७७, )

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—'स्वप्नवासवदत्त' नाटकस्य पञ्चमाङ्कादुद्धृते पद्येऽस्मिन् कविर्वर्णयति यद् राजा उदयन एकान्तस्थाने उपविष्टः सन्नचिरेण पद्मावतीं परिणीतवानपि चिरविरहकातरः वासवत्तायाः प्रणयमहिमानं जानंस्तदीयस्मरणानुभवं नाटयन् ब्रूते—श्लाघ्यामिति।

अन्वयः—कालक्रमेण, पुनरागतदारभारः, लावाणके, हुतवहेन, हृताङ्गयष्टिं, श्लाघ्याम्, अवन्तिनृपतेः, सदृशीम्, तनूजां, तां, हिमहतां, पद्मिनीम्, इव, चिन्तयामि।

व्याख्या—कालक्रमेण=समयमहिम्ना, वासवदत्ताविनाशकालात्कतिपय-कालातिक्रमानन्तरं वा, पुनरागतदारभारः=पुनः=भूयः, आगतः=उपस्थितो, दारभारः=पद्मावतीपरिग्रहरूपा धूर्यस्याऽसौ=अहम्, लावाणके=तन्नाम्नि ग्रामे,

हुतवहेन=अग्निना, हृताङ्गयष्टिम्=हृता=दग्धा, अङ्गयष्टिः=तनुलता यस्या सा हृताङ्गयष्टिस्ताम्। श्लाघ्याम्=गुणगौरवात्प्रशंसनीयाम्, अवन्तिनृपतेः=अवन्तिदेशाधीश्वरस्य प्रद्योतनाम्नोनृपतेः, सदृशीमनुरूपाम्, तनूजां=कुमारीं ताम्=भूयोऽनुभूतपूर्वां वासवदत्तामिति यावत्, हिमहताम्-हिमेन=पतितेन तुषारेण, 'तुषारस्तुहिनं हिमम्' इत्यमरः। हताम्=विदलितां नाशिताम्, पद्मिनीम्=कमलिनीमिव, चिन्तयामि=ध्यायामि, स्मरामीत्यर्थः। कथञ्चिन् पद्मावतीं परिणीतवतोऽपि वह्नौ दग्धां प्रशंसनीयगुणगणामनुरूपां राजकुमारीं वासवदत्तामुद्दिश्य मे मनोमार्गमारूढः शोकभारो न तावल्लघूभवति। वारं-वारं सैव मत्स्मरणपदवीं गाहते। अहो! तुहिनपातविहता सरोजिनीव सा मन्मानसं सुतरां दुःखीकरोतीति भावः। वृत्तमिदं वसन्ततिलकम्॥

समासः—कालस्य क्रमः कालक्रमः। पुनः आगतो दारभारो यस्याऽसौ पुनरागतदारभारः। हृता अङ्गयष्टिर्यस्या सा हृताङ्गयष्टिस्ताम् हृताङ्गयष्टिम्। अवन्तीनां नृपतिः अवन्तिनृपतिस्तस्य अवन्तिनृपतेः। तन्वाः जायते तनूजा, तां तनूजाम्। हिमेन हता हिमहता, तां हिमहताम्॥

प्रश्नः—

रूपश्रिया समुदितां गुणतश्च युक्ताम्
लब्ध्वा प्रियां मम तु मन्द इवाऽद्य शोकः।
पूर्वाभिघातसरुजोऽप्यनुभूतदुःखः
पद्मावतीमपि तथैव समर्थयामि॥ २॥

श्लोकोऽयं सप्रसङ्गं सुस्पष्टं व्याख्येयः।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—'स्वप्नवासवदत्त' नाटकस्य पञ्चमाङ्कादुद्धृते श्लोकेऽस्मिन् कविर्वर्णयति यद् राजा उदयनः स्वप्रेयस्या पद्मावत्या अस्वस्थतायाः श्रवणात्कष्टमनुभवति। किं तत्कष्टमिति वर्णयन्नाह राजा—रूपश्रियेति।

अन्वयः—रूपश्रिया, समुदिताम्, गुणतश्च, युक्ताम्, प्रियां, लब्ध्वा, अद्य, मम, शोकः, मन्द, इव, 'सञ्जातः', पूर्वाभिघातसरुजः, अपि, अनुभूतदुःखः, पद्मावतीम्, अपि, तथैव, समर्थयामि॥

**व्याख्या**—अथ = वर्तमानसमये, रूपश्रिया = स्वरूपशोभया समुदिताम् = समेताम्, गुणतः = गुणैः, च = पुनः, युक्ताम् = सहिताम्, अत एव प्रियाम् = प्रीतिपात्रं पद्मावतीमिति यावत्, लब्ध्वा = प्राप्य, समाश्वस्तस्येति शेषः, अद्य, मम = वासवदत्तावियुक्तस्य मे, शोकः = तद्विनाशजन्मा विषादस्तु, मन्द इव = किञ्चिन्न्यून इव, सञ्जात इति सामान्यक्रियाक्षेपः। पूर्वाभिघातसरुजः = पूर्वः = प्राथमिकश्चासावभिघातो = वासवदत्ताविनाशरूपवज्रपातः तेन कारणेन सरुजः = रुजया = पीडया सह वर्तमानो दुःखीति यावत्। अपि = पुनः, अनुभूतदुःखः = अनुभूतम् = भुक्तम्, दुःखं = कष्टं येन सः अनुभूतदुःखः = अहं, पद्मावतीं = नवोढामिमामपि, तथैव = मामिव दुःखानुभवकारिणीं दुःखिताम् अथवा विनाशगतां वासवदत्तामिव विनाशं गमिष्यन्तीं, समर्थयामि = सम्भावये। वसन्ततिलकं वृत्तम्॥

**समासः**—रूपस्य श्रीः रूपश्रीः, तया रूपश्रिया। पूर्वश्चाऽसौ अभिघातश्च पूर्वाभिघातः रुजा सहितः सरुजः, पूर्वाभिघातेन सरुजः पूर्वाभिघातसरुजः। अनुभूतं दुःखं येन सः अनुभूतदुःखः॥

**प्रश्नः**—

> ऋज्वायतां हि मुखतोरणलोलमालां
> भ्रष्टां क्षितौ त्वमवगच्छसि मूर्ख! सर्पम्।
> नन्दानिलेन निशि या परिवर्तमाना
> किञ्चित् करोति भुजगस्य विचेष्टितानि॥ ३॥

श्लोकोऽयं सुस्पष्टं व्याख्येयः। (१९७८)

**उत्तरम्**—सन्दर्भः प्रसङ्गनिर्देशश्च—'स्वप्नवासवदत्त' नाटकस्य पञ्चमाङ्कादुद्धृते श्लोकेऽस्मिन् कविर्वर्णयति यद् विदूषकस्य 'एष खलु दीपप्रभावसूचितरूपो वसुधातले परिवर्तमानोऽयं काकोदरः' इति वचनमाकर्ण्य तत्र स्थले किञ्चित् प्रवेशं विधाय विदूषकोक्तसर्पप्रतिभासविषयं तद्वस्तु सम्यगुद्वीक्ष्य तन्मूर्खतायां मन्दं हसन् राजा विस्मयमविष्करोति स्वान्ते, वस्तुस्थितिं दर्शयंस्तस्य सन्देहं च दूरीकरोति—ऋज्वायतामिति।

अन्वयः—हे मूर्ख !, ऋज्वायताम्, क्षितौ, भ्रष्टाम्, मुखतोरणलोलमालाम्, त्वं, सर्पम्, अवगच्छसि, या, निशि मन्दानिलेन किञ्चित् परिवर्तमाना, भुजगस्य, विचेष्टितानि, करोति ।

व्याख्या—अत्र 'हे' इति पदं पादपूरणे । हे मूर्खः=आर्यः अयथार्थज्ञानिन् ! ऋज्वायताम्=ऋजु=सरला, आयता=दीर्घा च ताम् । क्षितौ भ्रष्टाम्=भूमावधः पतिताम्, मुखतोरणलोलमालाम्=मुखं=प्रधानं, यत्तोरणं=गृहस्यबहिर्द्वारं 'तोरणोऽस्त्रीबहिर्द्वारम्' इत्यमरः । तत्र या लोला=पवनकम्पनवशाच्चञ्चला माला=शोभार्थमवलम्बिता पुष्पस्रक् ताम् मुखतोरणलोलमालाम् । त्वं=विदूषकः सर्पम्=भुजगम् अवगच्छसि । या, सर्पोऽयमिति निशि=रात्रौ, मन्दानिलेन= मन्दं वहता समीरेण किञ्चित् परिवर्तमाना=परितः स्पन्दमाना, भुजगस्य विचेष्टितानि=सर्पसदृशीश्चलनादिकाः क्रियाः, करोति=वितनोति । अयि सखे ! प्रधानभूतेऽस्मिन् समुद्रगृहस्य बहिर्द्वारेऽवलम्बिता सरला लम्बमाना च मालेयमिदानीं भूमौ पतितामन्दगतिना पवनेन किञ्चिच्चाञ्चल्यं नीयते, ते नैव सर्वसाधारणीश्चेष्टा वितन्वाना मूर्ख ! त्वयैषा 'सर्प' इति सम्भाव्यते । पवनेनकम्पमानायां तत्र ते सर्पभ्रमो जायते, नैशे किल समयेऽस्मिन्नापाततो युज्यते । वस्तुतो नाऽयं सर्पः किन्तर्हि मालेयमिति वस्तुस्थितिमपर्यालोचयतस्ते मौर्ख्यं प्रशंसनीयमिति भावः । भ्रान्तापह्नुतिरलङ्कारः । अत्र वसन्ततिलकावृत्तम् ॥

समासः—ऋजुश्च आयता च ऋज्वायता ताम् ऋज्वायताम् । मुखं यत्तोरणं मुखतोरणम्, मुखतोरणे लोला या माला सा मुखतोरणलोलमाला तां मुखतोरणलोलमालाम् । मन्दं च तदनिलं च मन्दानिलम् तेन मन्दानिलेन ।

प्रश्नः—

शय्या नावनता तथास्तृतसमा न व्याकुलप्रच्छदा
न क्लिष्टं हि शिरोपधानममलं शीर्षाभिघातौषधैः ।
रोमे दृष्टिविलोभनं जनयितुं शोभा न काचित् कृता
प्राणी प्राप्य रुजा पुनर्न शयनं शीघ्रं स्वयं मुञ्चति ॥ ४ ॥

पद्यमिदं सप्रसङ्गं व्याख्येयम् । (१९८२)

**उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च**—'स्वप्नवासवदत्त' नाटकस्य पञ्चमाङ्कादुद्धृते पद्येऽस्मिन् कविर्वर्णयति यत् 'पद्मावतीशीर्षवेदनया दुःखिते'ति वृत्तमाकर्ण्य विदूषकेन सह समुद्रगृहम्प्राप्तो राजा विदूषकस्य 'तत्रभवती पद्मावतीहागत्य निर्गताभवेदि'ति वचनं निशम्य ब्रवीति–'वयस्य ! अनागतयाभवितव्यमिति पुनश्च राजा विदूषकेन 'कथं भवान् जानाति ?' इति पृष्टे सति स्वकथनस्यौचित्यं समर्थयति—शय्येति ।

**अन्वयः**—हि, शय्या, न, अवनता, तथा आस्तृतसमा, न, व्याकुलप्रच्छदा, न, अमलं, शिरोपधानम्, शीर्षाभिघातौषधैः, क्लिष्टं, न, रोगे, दृष्टिविलोभनम्, जनयितुं, काचित्, शोभा, न, कृता, रुजा, प्राणी, शयनं, प्राप्य, पुनः, शीघ्रं, स्वयं, न मुञ्चति ।।

**व्याख्या**—हि = यस्मात् कारणात्, शय्या = शयनीयम्, न अवनता = शरीरभारेण हेतुनाऽवनतिं न प्राप्ता, तथा = एवम्, आस्तृतसमा = आस्तृता = कुशाद्यास्तरणेनालङ्कृता च सा समा = पूर्ववेदवास्ति मनागपि विषमतां नाधिगतेति यावत् । अथ च व्याकुलप्रच्छदा=व्याकुलो–गात्रपरिवर्तनादिना सङ्कुचितो, वलीभङ्गं प्राप्तः प्रच्छदः = निचोलपट उत्तरपिधानवस्त्रं यस्यां व्याकुलप्रच्छदा, 'निचोलः प्रच्छदपटः' इत्यमरः । अमलं = शिरःसम्बन्धसुलभेन मलेन विरहितं स्वच्छं, शिर उपधीयते=आरोप्यते यत्रेति शिरोपधानम् = शिरःस्थानीय उपबर्हः । शीर्षाभिघातौषधैः=शिरोवेदनापनोदकैरनुलेपनोयैरोपधिविशेषैः, क्लिष्टं = मलिनीकृतं, दूषितं, नास्ति । श्रीमत्याः पद्मावत्या अनागमनसाधकानि लक्षणानि प्रतिपाद्य तत्र शय्यागृहान्तर्गतं लक्षणान्तरमप्याह—रोग इति । रोगे = व्याधौ सति दृष्टिविलोभनं = दृष्टेरावर्जनं, जनयितुम् = आधातुं, काचिच्छोभा = भित्तौ चित्रलेखनादिसम्भवा कापि सुन्दरता, न कृता = न विहिता । अमीभिर्हेतुभिस्तत्र पद्मावत्या अनागमनकार्यं संसूच्य, अत्रागत्य पुनरितो निर्गता भवेत्' इति विदूषकोक्तमपि निराकुरुते = प्राणीति । रुजा = रोगेण कारणेन तदुपलक्षितो वा प्राणी = शरीरधारी यः कोऽपि जन्तुः, शयनं प्राप्य = शयनमासाद्य पुनः = भूयः, शीघ्रम् = तदानीमेव स्वयं = स्वतः, न मुञ्चति = तद्विहायान्यत्र गन्तुं न वाञ्छतीत्यर्थः । अत्र शय्यावनत्यभावादिहेतुभिः पद्मावत्यागमनाभावरूपसाध्यस्य साधनादनुमानालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ।

समासः—आस्तृता च सा समा आस्तृतसमा । व्याकुलः प्रच्छदो यस्यां सा व्याकुलप्रच्छदा । न विद्यते मलं यस्मिन् तत् अमलम् । शिर उपधीयते यस्मिंस्तत् शिरोपधानम् । शीर्षस्याऽभिघातः शीर्षाभिघातः, तस्यौषधम्, शीर्षाभिघातौषधम् तैः शीर्षाभिघातौषधैः । दृष्टेः विलोभनं दृष्टिविलोभनम् ॥

प्रश्नः—

स्मराम्यवन्त्याधिपतेः सुतायाः
प्रस्थानकाले स्वजनं स्मरन्त्याः ।
बाष्पं प्रवृत्तं नयनान्तलग्नं
स्नेहान्ममैवोरसि पातयन्त्याः ॥ ५ ॥

पद्यमिदं सप्रसङ्गं व्याख्येयम् ।　　(१९८३)

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—'स्वप्नवासवदत्त' नाटकस्य पञ्चमाङ्कादुद्धृते पद्येऽस्मिन् कविर्वर्णयति यत् समुद्रगृहे तत्रभवतीं पद्मावतीं प्रतीक्षमाणः राजा विदूषकं काञ्चित् कथां श्रावयितुं कथयति । विदूषकेण प्रस्तुतां उज्जयिनीनामधेयं श्रुत्वा तत्सम्बन्धेन प्रियाविषयकातीतं वृत्तं मनसि निधाय 'कथमुज्जयिनी नाम' इत्युक्तवतिराजनि 'उज्जयिनीविषयिणी कथा नास्मै रोचते' इति विचार्य विदूषकः अन्यां कथां कथयितुमुपक्रमते । ततश्च राजा तत्कथाया अप्रियात्वं निषेधयन् तन्नामश्रवणादुद्गतमात्मनो मानसं भावं प्रकटयन् ब्रूते—वयस्य न खलु नाभिप्रेतैषा कथा' इति पुनश्च 'अप्रियो न चेत्तन्नामश्रवणात् किमिति' शङ्कां निराकुर्वन्नाह राजा स्मरामीति ।

अन्वयः—प्रस्थानकाले, स्वजनं, स्मरन्त्याः, प्रवृत्तं, नयनान्तलग्नं, बाष्पम् स्नेहात्, मम, एव, उरसि, पातयन्त्याः, अवन्त्याधिपतेः, सुतायाः, स्मरामि ।

व्याख्या—प्रस्थानकाले = गमनकाले । यौगन्धरायणनीतिमहिम्ना स्वीय जनानुमतिमन्तरेणैव स्नेहान्मदीयमार्गानुसरणं कुर्वाणया वासवदत्तया समं यदाऽहमुज्जयिन्याः कौशाम्बीं गतवांस्तदेत्यर्थः । स्वजनं = परित्यज्यमानमात्मीयवर्गं स्मरन्त्याः = सोत्कण्ठं चिन्तयन्त्यास्ततत्परित्यागदुःखानुभवं कुर्वन्त्याः, प्रवृत्तं = स्वत उद्गतं, नयनान्तलग्नं = अपाङ्गयोः सङ्गतं तत्रावरुद्धमिति यावत्, बाष्पं = अश्रु, जातावेकवचनम्, स्नेहात् = प्रेमवशात्, ममैवोरसि = मदयी एव वक्ष

स्थले, पातयन्त्याः = मुञ्चन्त्याः, अवन्त्याधिपतेः=अवन्तिदेशाधीश्वरस्य प्रद्योतस्य, सुतायाः = वासवदत्तायाः, कर्मणः शेषत्वविवक्षायाम् 'अधीगर्थदयेशां कर्मणि' ( अष्टाध्यायी, २।३।५२। ) इति पाणिनीयसूत्रेण षष्ठीविभक्तिः। स्मरामि = तत्स्मरणं करोमीत्यर्थः। स्वजनं विहाय मया सह स्नेहादुज्जयिनीतः कौशाम्बीं प्रति प्रयाणसमये यथा स्वजनस्मरणं मुहुः कृतमासीत्, स्वजनस्नेहान्मत्प्रेम्णो वा तदानीमुद्गतान्यश्रूणि च यस्याः मद्भुजाश्लेषेण मदीयोरःस्थले भृशं निपतितानि, सैवाद्य प्रद्योतनृपतेः सुता वासवदत्ता मित्रवर! त्वया क्रियमाणमुज्जयिनीवर्णन-माकर्णयतो मम स्मरणसरणिं गाहमाना सती पूर्वानुभूतानि स्मारयतीत्येष एव भावोदयः समयेऽस्मिन् मामके सञ्जात इति भावः। अत्र उपजातिवृत्तम्। तल्लक्षणम् 'स्यादिन्द्रवज्रा यदि तौ जगौ गः, उपेन्द्रवज्रा जतजास्ततो गौ। अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः॥' इति।

समासः—प्रस्थानस्य कालः प्रस्थानकालस्तस्मिन् प्रस्थानकाले। स्वस्य जनः स्वजनस्तं स्वजनम्। नयनयोरन्तः नयनान्तः, नयनान्ते लग्नं नयनान्तलग्नम्। अवन्त्या अधिपतिः अवन्त्याधिपतिस्तस्य अवन्त्याधिपतेः। अत्र 'गवा स्वामी' इतिवत् स्वामित्वहेतुताविवक्षया तृतीयान्ते अवन्त्ये'ति पदे कल्पिते ततोदीर्घसन्धौ, अधिपतिपद आङः प्रश्लेषात् षष्ठीसमासे वा 'अवन्त्याधिपते'रित्युपपद्यते। अथवा अवन्तीषु साधुरित्यर्थे 'तत्र साधुः' ( अष्टाध्यायी ४।४।८९ ) इति पाणिनीयसूत्रेण यत् प्रत्यये 'अवन्त्य' इति रूपं सिध्यति। ततः अवन्त्यश्चासावधिपतिश्च अवन्त्याधिपतिस्तस्य अवन्त्याधिपतेरिति कर्मधारयसमासाश्रयणात्तत्प्रयोगोपपत्तिः॥

प्रश्नः—

बहुशोऽप्युपदेशेषु यथा मामीक्षमाणया।
हस्तेन स्रस्तकोणेन कृतमाकाशवादितम्॥ ६॥

श्लोकोऽयं सप्रसङ्गं व्याख्येयः।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—'स्वप्नवासवदत्त' नाटकस्य पञ्चमाङ्कादुद्धृते श्लोकेऽस्मिन् कविर्वर्णयति यद् विदूषकमुखेन उज्जयिनीनगर्याः नामश्रवणमात्रेण राजा उदयनः स्वप्रियायाः वासवदत्तायाः विषये अतीतं स्मर्तुमुपक्रमते—बहुश इति।

**अन्वयः**—बहुशः, अपि, उपदेशेषु, माम्, ईक्षमाणया, यया, स्रस्तकोणेन, हस्तेन, आकाशवादितं, कृतम् ॥

**व्याख्या**—बहुशोऽपि = अनेकविधेष्वपि, उपदेशेषु = मत्कर्तृकवीणावादन-शिक्षणावसरे दीयमानासु तदुचितासु शिक्षासु, माम् = उदयनं, ईक्षमाणया = आत्मनो मुखं मदभिमुखं कुर्वन्त्या । एतेन विशेषणेनाऽत्र 'यथावदुपदेशश्रवणपरायणा वासवदत्ता तत्र प्रसक्ते विषये दत्तावधाने'ति सूचितम् । किं 'किमुच्यत' इति श्रोतुमुत्कण्ठितानां शिक्षकवदनप्रेक्षिता प्राकृतिकी प्रसिद्धैव शिष्याणाम् । यया = वासवदत्तया, स्रस्तकोणेन = स्रस्तः = उपदेशश्रवणमुग्धचित्ततयाऽविदितं पतितः, कोणः = वीणावादनसाधनीभूतोऽङ्गुलीगतो वस्तुविशेषो यस्मात् तेन स्रस्तकोणेन, 'कोणो वीणादिवादनम्' कोषः । हस्तेन = करेण, आकाशवादितं लयतालादिशून्यं वादनं, कृतम् = विहितम् । यदा किल वासवदत्ता मत्तो वीणावादनकलां शिक्षते स्म, तदा तदुचितास्तस्यै बहव उपदेशा, मया, दीयन्ते, स्म । जातु तान् बहूनप्युपदेशान् साकल्येन सावधानव्याकुलं शृण्वती स्नेहान्मन्मुखार्पितदृष्टिरासीत् तत्र क्षणे । तेन च तदानीं स्वीयहस्ताच्च्युतः कोणो न विदितस्तया । कोणाभावेऽपि प्रेममुग्धतया वीणां रागस्वरव्यक्तिविरहितं सा कथञ्चिद् वादितवती । इदमेव सर्वमुज्जयिनीनामधेयश्रवणाद् 'एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकं भवती'ति न्यायेन मन्मनोरङ्गमञ्चेऽधुना मुहुर्मुहुरत्यतीति तेन किञ्चित्तदन्यदिव मे संवृत्तम् । न तावदुज्जयिनीविषयकं वर्णनं ममाऽप्रियमित्याशयः । अत्र अनुष्टुब्वृत्तम् ॥

**प्रश्नः**—

निष्क्रामन् सम्भ्रमेणाऽहं द्वारपक्षेण ताडितः ।
ततो व्यक्तं न जानामि भूतार्थोऽयं मनोरथः ॥ ७ ॥

श्लोकोऽयं सप्रसङ्गं व्याख्येयः । (१९६५)

**उत्तरम्**—सन्दर्भः प्रसङ्गनिर्देशश्च—'स्वप्नवासवदत्त' नाटकस्य पञ्चमाङ्कादुद्धृते श्लोकेऽस्मिन् कविर्वर्णयति यद् यदा राजा पद्मावत्याः शिरोवेदनायाः समाचारमाकर्ण्य समुद्रगृहं गतस्तदा पद्मावतीमप्राप्य 'अनागता से'ति मत्वा शयनीये सुप्तः स्वप्नायते । तत्रागता वासवदत्ता राजानमवगत्य किञ्चित् कालं

तत्र स्थित्वा ततो गच्छति । प्रेयसीकरसरोजसंस्पर्शात्तदानीमकस्मात्प्रबुद्धो राजा समीपतो गच्छन्तीं वासवदत्तामिव पश्यन् शयनादुत्थाय तां जिघृक्षुर्जिज्ञासमानश्च श्लोकेऽस्मिन् तात्कालिकीं निजामवस्थां वर्णयितुमुपक्रमते ।

**अन्वयः**—सम्भ्रमेण, निष्क्रामन्, अहं, द्वारपक्षेण, तडितः, ततः, व्यक्तं, न जानामि, अयं, मनोरथः भूतार्थः ।

**व्याख्या**—सम्भ्रमेण = तद्विषयपरीक्षणत्वरया, निष्क्रामन् = ततः प्रदेशान्निर्गच्छन्, अलं = उदयनः, द्वारपक्षेण = द्वारस्य पार्श्वभागेन, ताडितः = आहतोऽस्मि, ततः = तस्मात् कारणात्, व्यक्तं न जानामि = सैव स्यान्न वेति स्पष्टं न वेद्मि, तन्मुखानवलोकनान्निश्चितमत्र ज्ञानं मे किमपि नाभूत् । अयं मनोरथः = तद्विषयपरिज्ञानरूपोऽभिलाषः, भूतार्थः = भूतः = सञ्जातोऽर्थः = निवृत्तिर्यस्य सः भूतार्थः । 'अर्थोऽभिधेयवस्तुप्रयोजननिवृत्तिषु' इति कोषः । वस्तुतत्त्वपरीक्षणाभिलाषो विनष्ट इत्यर्थः । अयं मनोरथो, वासवदत्तादर्शनाभिलाषी भूतार्थः सत्यरूपोऽस्तीति न जानाम्यहम् । मनोरथस्य सत्यताकथनमिदं मनोरथविषयस्य सत्यतां गमयति । वासवदत्तादर्शनमिदं सत्यमस्तीति स्फुटं न ज्ञायते मयेति भावः । अनुष्टुब्वृत्तमिदम् ।

**समासः**—द्वारस्य पक्षः द्वारपक्षस्तेन द्वारपक्षेण । भूतः अर्थो यस्य सः भूतार्थः ।

**प्रश्नः**—

शय्यायामवसुप्तं मां बोधयित्वा सखे ! गता ।
दग्धेति ब्रुवता पूर्वं वञ्चितोऽस्मि रुमण्वता ।। ८ ।।

श्लोकोऽयं सप्रसङ्गं व्याख्येयः ।

**उत्तरम्**—सन्दर्भः प्रसङ्गनिर्देशश्च—'स्वप्नवासवदत्त' नाटकस्य पञ्चमाङ्कादुद्धृते श्लोकेऽस्मिन् कविर्वर्णयति यद् राजा पद्मावत्याः शिरोवेदनायाः समाचारमाकर्ण्य समुद्रगृहं गतस्तदा पद्मावतीमप्राप्य 'अनागता सेति' मत्वा शयनीये सुप्तः शयनायते । तत्रागता वासवदत्ता राजानमवगत्य किञ्चित् कालं तत्र स्थित्वा ततो गच्छति । तत्र प्रतिबुद्धो राजा सञ्जातचरवासवदत्तादर्शनविषयकं प्रियं वृत्तं सुहृदमुपयातं विदूषकं निवेदयितुकामस्तदुचितं वचः प्रस्तौति—'वयस्य !

प्रियमावेदये, धरते खलु वासवदत्ता' पुनः विदूषकेन तदुक्तिनिषिद्धे सति विदूषकोक्ति खण्डयन् राजा वासवदत्तादर्शनविषयकं वृत्तं श्लोकेऽस्मिन् निर्दिशति ।

अन्वयः—सखे ! शय्यायां, अवसुप्तं, मां, बोधयित्वा. सा, गता, सा, च, दग्धेति ब्रुवता, रुमण्वता, पूर्वं, वञ्चितः ।

व्याख्या—हे सखे !=हे मित्र ! शय्यायां=पर्यङ्के, अवसुप्तं=शयितं, मां=उदयनं, बोधयित्वा=जागरयित्वा, सा=वासवदत्ता, गता=दृशोऽगोचरतां प्रयाता । सा च दग्धा = भस्मीभूता, इति = इत्थं ब्रुवता = सूचयता, रुमण्वता = तदाख्येन मन्त्रिणा, पूर्वं = पुरा, वञ्चितः = प्रतारितः अस्मीति भूतार्थे लट्, अभूवमित्यर्थः । अनुष्टुब्वृत्तम् ।

प्रश्नः—

यदि तावदयं स्वप्नो धन्यमप्रतिबोधनम् ।
अथायं विभ्रमो वा स्याद्, विभ्रमो ह्यस्तु मे चिरम् ॥ ९ ॥

पद्यमिदं सप्रसङ्गं व्याख्येयम् । (१९७९)

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—'स्वप्नवासवदत्त' नाटकस्य पञ्चमाङ्कादुद्धृते पद्येऽस्मिन् कविर्वर्णयति यद् राजा उदयनः पद्मावत्याः शिरोवेदनायाः समाचारमाकर्ण्य समुद्रगृहं गतस्तदा पद्मावतीमप्राप्य 'जनागता सेति' मत्वा पद्मावतीं प्रतीक्षमाणः विदूषकेन सह कथां कुर्वन् निद्रां गतः । तदैव वासवदत्ताऽपि पद्मावत्याः शिरोवेदनासमाचारमवाप्य तत्रागता पद्मावतीबुद्ध्या तच्छयने पार्श्वभागे स्वपिति, स्वप्नायमानो राजाऽस्ति न पद्मावतीति सम्यग् ज्ञात्वा ततो बहिर्गता । ततः सुप्तोत्थितो राजा विदूषकेन 'सा ( वासवदत्ता ) स्वप्ने दृष्टा भवेत्' इत्युक्ते सति कथयति ।

अन्वयः—यदि, तावत्, अयं, स्वप्नः 'तर्हि' अप्रतिबोधनं, धन्यम्, 'मन्ये', अथवा, अयं, विभ्रमः स्यात्, हि, विभ्रमः, मे, चिरं, अस्तु ।

व्याख्या—यदि = चेत्, भवद्वचनाभ्युपगने इति यावत् तावद्वाक्यालङ्कारे अयं = वासवदत्तादर्शनरूपो विषयः, स्वप्नः = स्वप्नरूपो वर्तते, तर्हि, अप्रतिबोधनम् = यतो जागराभावः, धन्यं = समीचीनं, मन्ये इति शेषः । स्वप्ने हि

वासवदत्तादर्शनादिविषयाणामुपलब्धेस्तदानीं तदानन्दसन्दोहमनुभवतो जाग्रदवस्थायाः स्वप्नावस्थैव मे बहुमतेति भावः। अथवा = पक्षान्तरे 'नायं स्वप्नः किन्तर्हि जागर्त्तिरेवेति' कल्पनायाम्, अयं = वासवदत्तादर्शनरूपो विषयः विभ्रमो = मनोभ्रान्तिः स्यात् = भवेदिति सम्भावना। हि शब्दोऽयमित्यर्थे। विभ्रमः = सा मानसी भ्रान्तिरपि, मे = मम, चिरं = बहुकालं यावत्, अस्तु = भवतु। वासवदत्तादर्शनमिदं स्वप्नसम्भवं न चेद् भ्रान्तिमूलकं सम्भवति। प्रबुद्धावस्थायामपि सङ्कल्पबलान्मम उन्मादवशाद्यत्र कुत्रचिदपि कस्यचिच्चिन्तितार्थभ्रमो भवितुमर्हति। किन्तु सेयं तद्विषया भ्रान्तिरपि मे भूयांसं समयं योवदनुवर्तताम्। तावदेव क्षणं मनोऽनुरञ्जनस्य सम्भवादिति भावः। अनुष्टुब्वृत्तम्।

समासः—न प्रतिबोधनम् अप्रतिबोधनम्, नञ्तत्पुरुषसमासः।

प्रश्नः—

स्वप्नस्यान्ते विबुद्धेन नेत्रविप्रोषिताञ्जनम्।
चरित्रमपि रक्षन्त्या दृष्टं दीर्घालिकं मुखम्॥ १०॥

श्लोकोऽयं सप्रसङ्गं व्याख्येयः।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—'स्वप्नवासवदत्त' नाटकस्य पञ्चमाङ्कादुद्धृते श्लोकेऽस्मिन् कविर्वर्णयति यद् राजा उदयनः पद्मावत्याः शिरोवेदनायाः समाचारमाकर्ण्य समुद्रगृहं गतस्तदा पद्मावतीमप्राप्य 'अनागता सेति' मत्वा पद्मावतीं प्रतीक्षमाणः विदूषकेन सह कथां कुर्वन् निद्रां गतः। तदेव वासवदत्ताऽपि पद्मावत्याः शिरोवेदनासमाचारमवाप्य तत्रागता, पद्मावतीबुद्ध्या तच्छयने पार्श्वभागे स्वपिति, स्वप्नायमानो राजाऽस्तीति न पद्मावतीति च सम्यग् ज्ञात्वा ततो बहिर्गता। पुनश्च विदूषकेन, स्मृतिगतस्यानुभूतचरस्य वस्तुनो भ्रान्तिस्तत्समानवस्त्वन्तरदर्शनात्सम्भवतीति वस्त्वन्तरदर्शनं राज्ञः सम्भाव्यते इति निर्देशयता 'भो! वयस्य! एतस्मिन् नगरेऽवन्तिसुन्दरी नाम यक्षी प्रतिवसति। सा त्वया दृष्टा भवेत्' इत्युक्ते सति, श्लोकेऽस्मिन् राजा तन्निषेधयितुमुपक्रमते॥

अन्वयः—स्वप्नस्य, अन्ते, विबुद्धेन, 'मया', चारित्रम्, अपि, रक्षन्त्याः नेत्रविप्रोषिताञ्जनम्, दीर्घालिकं, मुखं, दृष्टम्॥

**व्याख्या**—स्वप्नस्यान्ते = स्वप्नावस्थायां निवृत्तायां, विबुद्धेन = जाग्रदवस्थायां स्थितेन, मयेति शेषः। चारित्रमपि = चरित्रमेव चारित्रमिति, अपिशब्देन जीवितमाक्षिप्यते, जीवितेन सह पतिव्रतानुरूपं शीलमपीत्यर्थः। रक्षन्त्याः = पालयन्त्याः, वासदत्ताया इति विशेषणं प्रकरणानुरोधाद्गम्यम्, नेत्रविप्रोषिताञ्जनम् = नेत्राभ्यां विप्रोषितं = प्रवासं गतं दूरभूतमिति यावत्, अञ्जनं = कज्जलं यस्मिन् तत्। दीर्घालकम् = दीर्घा = लम्बमानाः अलकाः = घूर्णकुन्तलाः यस्मिन् तत्। तादृशं मुखं = वदनं, दृष्टम् = साक्षात् कृतम्। निद्रावसाने यदाऽहं प्रबुद्धोऽभवम् तदा वासवदत्तामुखं दृष्टवान्। नेत्रे तस्या अञ्जनशून्ये अलकाश्च केशानां यथावदसंयतत्वेन परितः प्रसर्पन्तो लम्बमाना आसन्। सा किल मद्वियोगेऽस्मिन्न केवलं कष्टमयं जीवितम्, अपि तु तेन समं सतीजनोचितमाचारमप्यद्य यावत् समीचीनं रक्षतीत्येतन्मया प्रत्यक्षमनुभूतमिति भावः। अनुष्टुप् छन्दः॥

**समासः**—चरित्रमेव चरित्रम्। नेत्राभ्यां विप्रोषितं अञ्जनं यस्मिन् तत् नेत्रविप्रोषिताञ्जनम्। दीर्घा अलकाः यस्मिन् तत् दीर्घालकम्॥

**प्रश्नः**—

योऽयं सन्त्रस्तया देव्या तया बाहुर्निपीडितः।
स्वप्नेऽप्युत्पन्नसंस्पर्शो रोमहर्षं न मुञ्चति॥ ११॥

**श्लोकोऽयं सप्रसङ्गं व्याख्येयः।**

**उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च**—'स्वप्नवासवदत्त' नाटकस्य पञ्चमाङ्कादुद्धृते श्लोकेऽस्मिन् कविर्वर्णयति यद् राजा उदयनः पद्मावत्याः शिरोवेदनायाः समाचारमवगत्य समुद्रगृहं गतस्तदा पद्मावतीमप्राप्य 'अनागता सेति' मत्वा पद्मावतीं प्रतीक्षमाणः विदूषकेन सह कथां कुर्वन् निद्रां गतः। तदैव वासवदत्तापि पद्मावत्याः शिरोवेदनासमाचारमवाप्य तत्रागता, पद्मावतीबुद्ध्या तच्छयने पार्श्वभागे स्वपिति, स्वप्नायमानो राजाऽस्ति न पद्मावतीति सम्यग् ज्ञात्वा ततो बहिर्गता। पुनश्च विदूषकेन, स्मृतिगतस्यानुभूतचरस्य वस्तुनो भ्रान्तिस्तत्समानवस्त्वन्तरदर्शनात् सम्भवतीति वस्त्वन्तरदर्शनं राज्ञः सम्भाव्यते इति निर्देशयता 'भो! वयस्य! एतस्मिन् नगरेऽवन्तिसुन्दरी नाम यक्षी प्रतिवसति। सा त्वया

दृष्टा भवेत्' इत्युक्ते सति श्लोकेऽस्मिन् राजा तन्निषेधयितुं स्वशरीरसमुद्भूतं चिह्नं च किञ्चिद् दिदर्शयिषुस्तदुचितां वाचमवतारयति ॥

**अन्वयः**—सन्त्रस्तया, तया, देव्या, अयं, यः, बाहुः, निपीडितः, स्वप्ने, अपि, उत्पन्नसंस्पर्शः, रोमहर्षं, न, मुञ्चति ॥

**व्याख्या**—सन्त्रस्तया = मत्प्रबोधसम्भावनाभीतया, तया देव्या = वासवदत्तया, अयं = पुरो दृश्यमानः, यो बाहुः = मम भुजो, निपीडितः = स्वकरेण गृहीतः यत्र तादृशः स बाहुरिति शेषः। स्वप्नेऽपि = निद्रावस्थायामपि, उत्पन्नसंस्पर्शः = उत्पन्नः = उद्भूतः संस्पर्शः=स्पर्शो यस्मिन् सः उत्पन्नसंस्पर्शः। रोमहर्षं—रोमाञ्चं न मुञ्चति = अद्यापि न त्यजति। अयं भावः = अत्रागत्य चिरकालस्पृहणीयोपलब्धमदीयदर्शनसम्भावनया अमन्दानन्दसन्दोहसंरम्भवशान्मद्भुजपरिरम्भणं कर्तुकामा प्रिया मे वासवदत्ता प्रणयेन मदीयं भुजं गृहीतवती। स्वप्नगतेनापि तत्पाणिपङ्कजस्पर्शेन भुजो मे रोमाञ्चितोऽभूदयम्। अयमसौ सात्त्विकभावः प्रियतमापाणिपङ्केरुहस्पर्शमन्तरेण न सम्भवतीति वासवदत्तादर्शनोपलब्धिपक्षोऽयं दृढं सिद्ध एव। कमपि नात्राऽवकाशं लभतेऽवन्तिसुन्दरीसम्बन्ध इति। अनुष्टुप् छन्दः।

**समासः**—उत्पन्नः संस्पर्शो यस्मिन् स उत्पन्नसंस्पर्शः। रोम्णः हर्षो रोमहर्षः ॥

**प्रश्नः**—

भिन्नास्ते रिपवो भवद्गुणरताः पौराः समाश्वासिताः
पार्ष्णी यापि भवत्प्रयाणसमये तस्या विधानं कृतम्।
यद्यत् साध्यमपरिप्रमाथजननं तत्तन्मयानुष्ठितम्
तीर्णा चापि बलैर्नदी त्रिपथगा वत्साश्च हस्ते तव ॥ १२ ॥

श्लोकोऽयं सप्रसङ्गं व्याख्येयः।   ( सन् १९६८ )

**उत्तरम्**—**सन्दर्भः प्रसङ्गनिर्देशश्च**—'स्वप्नवासवदत्त' नाटकस्य पञ्चमाङ्कादुद्धृते श्लोकेऽस्मिन् कविर्वर्णयति यद् राजा उदयनः स्वप्ने दृष्टायाः वासवदत्तायाः विषये विदूषकेन सह वार्तां करोति तदैव काञ्चुकीय आगत्य दर्शकसन्देशं रुमण्वतः प्रयासेन शत्रुपराभवंविजययात्रादिकञ्च श्रावयति ॥

**अन्वयः**—ते, रिपवः, भिन्नाः, भवद्गुणरताः, पौराः, समाश्वासिताः, अपि, या, पार्ष्णी, भवत्प्रयाणसमये, 'रक्षणीयतयोपयुज्यते' तस्याः, विधानं, कृतम्, अरिप्रमाथजननं, यद्यत्, साध्यम्, तत्तत्, मया, अनुष्ठितम्, त्रिपथगा, नदी, बलैः, तीर्णा, वत्साश्च, तव, हस्ते, 'सन्ति' ॥

**व्याख्या**— ते = तव, रिपवः = शत्रवः; भिन्नाः = भेदं प्रापिताः, परस्परं विरोधप्रोद्भावनेन पृथक्कृताः। भवद्गुणरताः=भवदीयेषु दयादाक्षिण्यादिगुणेष्वनुरागं वहन्तः, पौराः = पुरेभवाःनागरिकाः प्रजा इति यावत्, समाश्वासिताः = 'विजयलक्ष्म्याऽलङ्कृतः श्रीमान् वत्सराजोऽचिरादेव लब्धराज्यो भवतः पालयिष्यती'ति समाश्वासनदानेन सम्यक् सम्भाविताः। अपि = तथा, या पार्ष्णी = यत् सैन्यपृष्ठं, 'पार्ष्णिः स्यादुन्मदः स्त्रियाम्, स्त्रियां द्वयोः सैन्यपृष्ठे' इति ङीषि पार्ष्णीशब्दोऽपि सिध्यति। भवत्प्रयाणसमये = भवदीयसमरविजययात्रावसरे, रक्षणीयतयोपयुज्यत इति शेषः, तस्याः विधानं कृतम्=तद्रचना साधु सम्पादिता। सैन्यपृष्ठं यथा रक्षितं स्यात्तथा तदुचित उपायः कल्पितः—इत्यर्थः। अरिप्रमाथजननं = शत्रुविध्वंसकं यद्यत् कार्यं साध्यम् = साधनीयमासीत्, तत्तत् सर्वं, मया= दर्शकेन, अनुष्ठितं = संसाधितम्। त्रिपथगा = त्रयाणां=स्वर्गमृत्युपातालात्मनां पथां = मार्गाणां समाहारास्त्रिपथमिति द्विगुः, तेन गच्छति सेत्युपपदसमासः, नदी = गङ्गानामपुण्या सरित्, बलैः = सैन्यैः, तीर्णा = तरणविषयं नीता। एवंविधाखिलसाधनसम्पादनवशाद्भाविनीं कार्यसिद्धिं प्राप्तकालां सूचयति—वत्साश्चेति। वत्साः = वत्सदेशाश्च, 'जनपदवाचिनः शब्दाः भूम्नि प्रयुज्यन्त' इति सङ्केतानुसारं बहुत्वमिदम्, तव = भवतः, हस्ते = करगतास्त्वदधीनाः सन्तीति सम्भावनीयम्। शत्रूणां परस्परं भेदः, शत्रावधीनतां प्राप्तवतां पूर्वानुभूतभवद्गुणगणानुरागशालिनां पौराणां कष्टमुक्तिसमाश्वासनं समरप्रयाणसमयोचितः सैन्यदृष्टरक्षोपायश्चेति सर्वं सम्पादितम्। किं बहुना = शत्रुविध्वंसनोचितं सकलमपि संविधानकं रचितम्। सेनापि गङ्गाया उत्तरतीरं गता सती सन्नद्धाऽवतिष्ठते। सति चैवंविधे व्यतिकरे पुनर्वत्सदेशसाम्राज्यशासनरज्जुरचिरादेव भवत्करगता स्यादित्येतन्निश्चितमवगम्यतामित्यर्थः। यथोचितकल्पितोपकरणैः सम्पादितमिदं सर्वं भवत्करिष्यमाणसपत्नाभिगमनोचितकार्यानुकूल्यं मन्मुखेन श्रीमहाराजदर्शको भवन्तं निवेदयन् समरायो-

त्थापयितुमाकाङ्क्षतीत्यविलम्बेन भवताऽपि तत्प्रयाणायोद्यमः सम्यगवलम्बनीय इति भावः । शार्दूलविक्रीडितं वृत्तम् ॥

**समासः**—भवतो गुणेषु रताः भवद्गुणरताः । पुरे भवाः पौराः । भवतः प्रयाणं भवत्प्रयाणम्, भवत्प्रयाणस्य समयः भवत्प्रयाणसमयस्तस्मिन् भवत्प्रयाण-समये । अरीणां प्रमाथः अरिप्रमाथस्तस्य जननं अरिप्रमाथजननम् । त्रयाणां पथां समाहारस्त्रिपथम्, त्रिपथेन गच्छति या सा त्रिपथगा ॥

**प्रश्नः**—

उपेत्य नागेन्द्रतुरङ्गतीर्णे तमारुणिं दारुणकर्मदक्षम् ।
विकीर्णबाणोग्रतरङ्गभङ्गे महार्णवाभे युधि नाशयामि ॥१३॥

श्लोकोऽयं सप्रसङ्गं व्याख्येयः । ( सन् १९६९ )

**उत्तरम्**—सन्दर्भः प्रसङ्गनिर्देशश्च—'स्वप्नवासवदत्त' नाटकस्य पञ्च-माङ्कादुद्धृते श्लोकेऽस्मिन् कविर्वर्णयति यत् समयोचितसमरसन्नाहसूचकं काञ्चु-कीयवचो निशम्य राजा उदयनः शौर्यभावोद्वेगभावितं समरोत्साहमभिनयन् ब्रूते—उपेत्येति ।

**अन्वयः**—उपेत्य, नागेन्द्रतुरङ्गतीर्णे, विकीर्णबाणोग्रतरङ्गभङ्गे, महार्णवाभे, युधि, दारुणकर्मदक्षम्, तम्, आरुणिं, नाशयामि ।

**व्याख्या**—इदानीं समयेऽस्मिन्, सिद्धेषु = युद्धोचितसाधनेषु, अयमहम्, उपेत्य = अभिगम्य, शत्रुमाक्रम्येति यावत्, नागेन्द्रतुरङ्गतीर्णे = नागेन्द्रैः = गज-श्रेष्ठैरश्वैश्च, तीर्णे = तरणक्रीडाविषयीकृते, विकीर्णबाणोग्रतरङ्गभङ्गे = विकीर्णाः =व्याप्ताः, बाणाः = शराः, उग्राः = भीषणाः तरङ्गभङ्गाः = ऊर्मीणां लहर्य इव यस्मिन् तस्मिन् अत एव महार्णवाभे = महार्णवस्य आभेवाभा यस्यासौ तस्मिन् महार्णवाभे = महासमुद्रसदृशे, युधि=युद्धे, दारुणकर्मदक्षम् = दारुणेषु = कण्टकरेषु, कर्मसु दक्षम् = निपुणम् तम् = प्रसिद्धं राज्यापहारिणम्, आरुणिम् = तन्नामकं शत्रुम्, नाशयामि = उन्मूलयामि, नामशेषं करोमीत्यर्थः । एषोऽहं चतुरङ्गसेनया शत्रुमाक्रामन् गजवाजिसञ्चारसङ्कुले बाणजालाच्छन्ने रणाङ्गणे दुष्टमात्मनः शत्रुं निपात्य समूलं विध्वंसयाम्यधुना । कोऽयं मत्पुरो वराकः स्थातुं समर्थः ? अचि-

रादेव निष्कण्टकं प्रियतमासहचरोऽनुभूतचरं राज्यसुखं निर्वेक्ष्यामि चिरं यथारुचीति भावः ।

**समासः**—नागेन्द्राः तुरङ्गाश्च तीर्णाः यस्मिन् तत् नागेन्द्रतुरङ्गतीर्णम्, तस्मिन् नागेन्द्रतुरङ्गतीर्णे । अथवा नागेन्द्रैस्तुरङ्गैश्च तीर्णम् नागेन्द्रतुरङ्गतीर्णम्, तस्मिन् नागेन्द्रतुरंगतीर्णे । विकीर्णाः वाणाः उग्रतरंगाणां भंगा इव यस्मिन् तस्मिन् विकीर्ण बाणोग्रतरंगभंगे । महार्णवस्येव आभा यस्यासौ महार्णवाभः तस्मिन् महार्णवाभे । दारुणेषु कर्मसु दक्षः दारुणकर्मदक्षः तं दारुणकर्मदक्षम् ।

॥ इति पञ्चमोऽङ्कः ॥

## षष्ठोऽङ्कः

**प्रश्नः**—

श्रुतिसुखनिनदे ! कथं नु देव्याः
　　स्तनयुगले जघनस्थले च सुप्ता ।
विहगगणरजोविकीर्णदण्डा
　　प्रतिभयमध्युषिताऽस्यरण्यवासम् ॥ १ ॥

**श्लोकोऽयं सप्रसङ्गं व्याख्येयः ।**

**उत्तरम्**—सन्दर्भः प्रसङ्गनिर्देशश्च—'स्वप्नवासवदत्त' नाटकस्य षष्ठाङ्कादुद्धृते श्लोकेऽस्मिन् कविः श्रीमतो वत्सराजस्योदयनस्य रंगमञ्चे प्रवेशमिमं विदूषकेण समं प्रदर्शयति, यत्र पुनः प्राक्प्रकल्पितसूचनानुसारमुपस्थास्यते श्रीमन्महाराजमहासेनसन्देशनिवेदनाय प्रतीहार्या, प्रविष्टस्य वासवदत्तावियोगदौर्भाग्यदूषितां घोषवतीं वीणामुद्दिश्य राज्ञः शोकोद्गारमाह ।

**अन्वयः**—श्रुतिसुखनिनदे ! देव्याः, स्तनयुगले, जघनस्थले, च, सुप्ता, 'त्वं', विहगगणरजोविकीर्णदण्डा, प्रतिभयम्, अरण्यवासम्, कथं नु, अध्युषिता असि ।

**व्याख्या**—हे श्रुतिसुखनिनदे ! श्रुत्योः सुखः = श्रवणानन्ददायी, निनदः = निक्वणस्तालस्वरसमन्वितः शब्दो यस्यास्तादृशि ! वीणे इति विशेष्यमर्थानुरोधाद् गम्यम्, देव्याः = वासवदत्तायाः स्तनयुगले = कुचयुगले, जघनस्थले = कटिपुरो-

भागे च सुप्ता = सुशयनं प्राप्ता ससुखमवस्थितेति यावत्, वादनावसरे हि वीणाया उत्संगसंगिन्याः स्तनजघनसम्बन्धो भवत्येव, एतादृग्विशेषणविशिष्टा त्वं विहग-गणरजोविकीर्णदण्डा = विहगगणेन = पक्षियूथेन, रजोभिः = धूलिभिश्च विहग-गणस्य रजसानलरूपेण वा विकीर्णो = व्याप्तो दूषित इति यावत् दण्डो यस्याः सा विहगगणरजोविकीर्णदण्डा, प्रतिभयं = भयङ्करं, 'भयङ्करं प्रतिभय' मित्यमरः, अरण्यवासम् = उष्यतेयत्रेति वासः = निवासस्थानम्, अरण्यमेव वासो अरण्य वासस्तम् अरण्यवासम् = वनस्थलमिति यावत् कथं नु = केन प्रकारेण, कीदृशम् अध्युषिता असि = आश्रितवत्यसि । अयि ! सुस्वरे ! घोषवति ! या त्वं पुरा वीणावादनक्रीडावसक्तचित्तया वासवदत्तया सस्नेहं कमनीयकोमलोत्संगदेशे लालिता सती तत्र सुस्थले ऽवस्थानसुखं सुचिरमन्वभूः, कथमहो ! दुर्दैवादमीषु दिवसेषु पक्षिगणजुष्टं धूलिधूसरं पक्षिमलदूषितं वा वीणादण्डं दधानया त्वया भयानकवनवासयातना असह्या सोढाः ? पुष्पिताग्रा नाम वृत्तमिदम्, 'अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा' इति च तल्लक्षणम् ।

**समासः**—श्रुत्योः सुखः निनदो यस्याः सा श्रुतिसुखनिनदा, तत्सम्बुद्धौ श्रुतिसुखनिनदे । स्तनयोर्युगलं स्तनयुगलम् तस्मिन् स्तनयुगले । जघनयोः स्थलं जघनस्थलं तस्मिन् जघनस्थले । विहगानां गणो विहगगणः, तेन विहगगणेन रजोभिश्च, विहगगणस्य रजसा वा विकीर्णो दण्डो यस्याः सा विहगगणरजो-विकीर्णदण्डा । उष्यते यत्रेति वासः, अरण्यमेव वासः अरण्यवासः तं अरण्यवासम् ॥

**प्रश्नः**—

श्रोणीसमुद्वहनपार्श्वनिपीडितानि
स्वेदस्तनान्तरसुखान्युपगूहितानि ।
उद्दिश्य मां च विरहे परिदेवितानि
वाद्यान्तरेषु कथितानि च सस्मितानि ॥ २ ॥

श्लोकोऽयं सप्रसङ्गं व्याख्येयः ।

**उत्तरम्**—सन्दर्भः प्रसङ्गनिर्देशश्च—'स्वप्नवासवदत्त' नाटकस्य षष्ठाङ्कादुद्धृते श्लोकेऽस्मिन् राजा घोषवत्याः वासवदत्ताविषयकं पूर्वोक्तमेव स्नेह-राहित्यं विशदीकरोति ॥

**अन्वयः**—या, त्वं, तपस्विन्याः, श्रोणीसमुद्वहनपार्श्वनिपीडितानि, खेदस्तनान्तरसुखानि, उपगूहितानि, विरहे, माम्, उद्दिश्य 'कृतानि' परिदेवितानि, च, वाद्यान्तरेषु, सस्मितानि, कथितानि, न, स्मरसि ?

**व्याख्या**—या त्वं, तपस्विन्याः = दीनायाः विपत्काले रक्षकं कञ्चिदप्राप्तवत्या इति यावत् । 'मुनिदीनौ तपस्विना'वित्यमरः । अत्र 'वासवदत्ताया' इति विशेष्यमर्थानुगतम्, श्रोणीसमुद्वहनपार्श्वनिडितानि = श्रोण्या = तत्पुरोभागेन जघनेनेति यावत्, 'कटिः श्रोणि'रित्यमरः, समुद्वहनानि = वाद्यभाण्डस्य धारणानि च पार्श्वेन = कक्षाधःप्रदेशेन, निपीडितानि = दण्डस्य घर्षणानि च तानि । इतरेतरयोगोनाम द्वन्द्वसमासः । खेदस्तनान्तरसुखानि = खेदे = वादनश्रमे सति स्तनान्तरे = कुचमध्यभागे 'अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये । छिद्रात्मीयविनावधिरवसरमध्येऽन्तरात्मनि चे'त्यमरः, सुखानि = सुखकराणि उपगूहितानि = उपगूहनानि = आलिङ्गनानि, किञ्च, विरहे = मद्वियोगे माम् = उदयनम्; उद्दिश्य अभिलक्ष्य, कृतानीति शेषः, परिदेवितानि = विलापाः, 'विलापः परिदेवनम्' इत्यमरः, च = अन्यच्च, वाद्यान्तरेषु = वादनीयप्रकारविशेषेषु, सस्मितानि = मन्दहासेन सहितानि, स्मितमत्रालौकिकवादनप्रकारदर्शनादन्तर्गतानन्दसन्दोहोद्भेदं सूचयति, कथितानि = प्रशंसापराणि वचनानि, न स्मरसि = स्मृतिमार्गं न प्रापयसि, तदेतत्सर्वं विस्मरसीत्यर्थः, वसन्ततिलकं छन्दः ।।

**समासः**—श्रोण्या समुद्वहनानि पार्श्वेन निपीडितानि च तानि श्रोणीसमुद्वहनपार्श्वनिपीडितानि, इतरेतरयोगद्वन्द्वसमासः । खेदे स्तनान्तरे सुखानि तानि खेदस्तनान्तरसुखानि । स्मितेन सहितानि सस्मितानि ।।

**प्रश्नः**—

> चिरप्रसुप्तः कामो मे वीणया प्रतिबोधितः ।
> तां तु देवीं न पश्यामि यस्या घोषवती प्रिया ।। ३ ।।

श्लोकोऽयं सप्रसङ्गं व्याख्येयः ।

**उत्तरम्**—सन्दर्भः प्रसङ्गनिर्देशश्च—'स्वप्नवासवदत्त' नाटकस्य षष्ठाङ्कादुद्धृते श्लोकेऽस्मिन् कविर्वर्णयति यत् प्रियावियोगपरिप्राप्तचित्ततया विलपन्

राजानमुदयनं ततो निवारयता सुहृदमाश्वासयितुकामेन विदूषकेन 'अलमिदानीं भवानतिमात्रं सन्तप्य' इत्युक्ते सति तच्छ्रुत्वा राजा श्लोकेऽस्मिन् स्वसन्तापस्यानिवार्यत्वं सूचयति ॥

अन्वयः—चिरप्रसुप्तः, मे, कामः, वीणया, प्रतिबोधितः, घोषवती, यस्याः, प्रिया, 'आसीत्', तां, देवीं, तु, न, पश्यामि ॥

व्याख्या—चिरप्रसुप्तः = चिरं शयितः, उद्बोधकाभावादप्रबुद्ध इति यावत्, मे = मम, कामः = वासवदत्ताविषयको मानसोऽभिलाषः, वीणया = अनया घोषवत्या, प्रतिबोधितः = उद्बोधितः, घोषवती = सेयं वीणा, यस्याः = वासवदत्तायाः, प्रिया = प्रीतिपात्रम्, आसीदिति शेषः, तां = गत्प्रेमसर्वस्वं, देवीं = वासवदत्तां, तु, न पश्यामि = न साक्षात्करोमि । वियोगदिवसादारभ्य प्रियतमाविषयिणी गाढोत्कण्ठा ममेयं परिपूर्तिसाधनादद्य यावत् क्रमेण परिक्षीणतां गच्छन्ती हृदये निलीनप्रायेव जाता, उद्बोधकं च नासीत्तस्याः किमपि । अद्य तूपलब्धेयं वीणा मत्प्रियां वासवदत्तां स्मारयन्ती नितान्तं तदीयमुत्कण्ठाविशेषमुद्भावयति मे । एषा च घोषवती यस्यै भृशमरोचत, दुर्दैवादद्य सा मे प्रिया वासवदत्ता न तावल्लोचनगोचरतां गच्छति हन्त ! तां न विस्मारयति वीणेयं तत्तदनुभूतं स्मारयन्ती माम् । अतः कथमयं निवारणीयो मे महत्तमस्तत्परीताप इति भावः । अनुष्टुब्वृत्तमिदम् ॥

प्रश्नः—

किं वक्ष्यतीति हृदयं परिशङ्कितं मे
　　कन्या मयाप्यपहृता न च रक्षिता सा ।
भाग्यैश्चलैर्महदवाप्तगुणोपघातः
　　पुत्रः पितुर्जनितरोष इवास्मि भीतः ॥ ४ ॥

श्लोकोऽयं ससन्दर्भं सप्रसङ्गं च व्याख्येयः ।

उत्तरम् —सन्दर्भः प्रसङ्गनिर्देशश्च—'स्वप्नवासवदत्त' नाटकस्य षष्ठाङ्कादुद्धृते श्लोकेऽस्मिन् कविर्वर्णयति यत् महासेनस्य सकाशात् काञ्चुकीयस्य वासवदत्ताधात्र्या वसुन्धरायाश्चागमनवृत्तं निशम्य 'तातेनाऽम्बया च किं नाम

कीदृशं सन्देक्ष्यत' इत्येवं व्याकुलां पद्मावतीं श्रुत्वा राजा उदयनः आत्मनोऽपि तादृशं शङ्काकुलत्वं प्रतिपादयन्नाह—किं वक्ष्यतीति।

**अन्वयः**—किं वक्ष्यति, इति, मे, अपि, हृदयं, परिशङ्कितम्, मया, कन्या, अपहृता, च, सा, न, रक्षिता, चलैः, भाग्यैः, महदवाप्तगुणोपघातः, पितुः, जनितरोषः, पुत्र, इव, भीतः, अस्मि॥

**व्याख्या**—अत्र प्रथमे चरणे तातोऽम्बा वेति कर्तृपदे पूर्वतोऽनुसृते तयोश्च पृथक् पृथक् प्रत्येकं सम्बन्धाद् 'वक्ष्यती'त्येकवचनोपपत्तिः। वासवदत्तायास्तातः प्रद्योतो माताऽङ्गारवती च दूतमुखेन किं वक्ष्यति = किं सन्देक्ष्यति, इति = अस्मिन् विषये, मे द्वितीयचरणादपिशब्दोऽत्रानुकर्षणीयः, मे अपि = भवत्या इव ममापीति यावत् हृदयं = मनः, परिशङ्कितं = शङ्कायुक्तं वर्तते। तामेव हार्दिकीं शङ्कां प्रवर्तयत्कारणं प्रदर्शयति—कन्येति। मया = वत्सराजेन कन्या= अनूढा वासवदत्ता, यद्वा तयोस्तातम्बयोः कुमारी, अपहृता = उज्जयिन्याः पलाय्य कौशाम्बीमानीता, च = अपि च, सा = वासवदत्ता, न रक्षिता = न परिपालिता। पूर्वं वासवदत्ताया अपहरणमेवासीदनुचितम्। तत्रापि रक्षणं कृतं चेदनुचितं पुनर्मयाचरितम् एतदेव मे हार्दिकीं शङ्कां जनयतीति भावः। चलैः = अस्थिरैः परिवर्तनशीलैः, भाग्यैः = पूर्वजन्मकृतकर्मभिर्हेतुभूतैः, महदवाप्तगुणोपघातः = महत्सु = गुरुजनेषु, अवाप्तः = प्राप्तः इति यावत् गुणानां = सदाचारादीनां उपघातः = शङ्को येन सः महदवाप्तगुणोपघातः अहमिति शेषः। सदाचारभङ्गश्चात्र गुरुजनादेशाऽप्रतीक्षण-पुरःसरं वासवदत्ताया अपहरणमेव। पितुः = जनयितुः, जनितरोषः = जनितः = उत्पादितो रोषः = अनुचितकारितामूलकः क्रोधो येन सः जनितरोषः। पुत्र इव = तनयो यथा भीतो = भयान्वितोऽस्मि। वासवदत्तामपहृत्य तत्रापि तद्रक्षणेऽक्षमतां गतोऽहं प्रत्युत तां नाशितवानस्मी'त्येतं विषयमुद्दिश्य ताभ्यां किं वक्ष्यते?' शङ्कयाऽनया नितरां पर्याकुलं मे मनः। दैवदोषात् सदाचारविरुद्धमाचरितं मया। ध्रुवमधुना पितरं कोपयन् पुत्र इवाहं भीतोऽस्मीत्यर्थः।

**समासः**—महत्सु अवाप्तः गुणानामुपघातो येन सः महदवाप्तगुणोपघातः। जनितः रोषो येन सः जनितरोषः॥

प्रश्नः—

सम्बन्धिराज्यमिदमेत्य महान् प्रहर्षः
स्मृत्वा पुनर्नृपसुतानिधनं विषादः।
किं नाम दैव ! भवता न कृतं यदि स्याद्
राज्यं परैरपहृतं कुशलं च देव्याः ॥ ५ ॥

श्लोकोऽयं सप्रसङ्गं व्याख्येयः।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—'स्वप्नवासवदत्त' नाटकस्य षष्ठाङ्कादुद्धृते श्लोकेऽस्मिन् कविः विवाहसमये कृतां वासवदत्ताप्रतिकृतिमादाय धात्र्या सहितः राजानमुदयनम्प्राप्तः महासेनस्य राज्ञः काञ्चुकीयः स्वमानसमुद्गारं प्रदर्शयति।

अन्वयः—भोः ! इदं सम्बन्धिराज्यम्, एत्य, मम, महान्, प्रहर्षः, पुनः, नृपसुतानिधनं, स्मृत्वा, महान्, विषादः, हे दैव ! परैः, अपहृतं, राज्यम्, देव्याः, कुशलं, च, यदि, स्याद्, भवता, किं नाम, न कृतम्, स्यात्।

व्याख्या—अत्र महानिति विशेषणं प्रहर्षविषादयोरुभयत्रान्वेति। इदं = दृश्यमानं शत्रोः सकाशात् प्रत्यावर्तितं वा, सम्बन्धिराज्यम् = स्वामिजामातुः शासनविषयीकृतां भूमिम् एत्य = आगत्य, ममेति शेषः, महान् = भूयान्, प्रहर्षः = प्रमोदो भवति, पुनः = किञ्च, नृपसुतानिधनं = नृपसुतायाः = राजकुमार्याः वासवदत्तायाः निधनं = मरणं 'मरणं निधनमस्त्रियाम्' इत्यमरः, स्मृत्वा = चिन्तयित्वा, महान् विषादः = अनल्पः खेदो भवति। हे दैव ! = विधे ! परैः = शत्रुभिः, अपहृतम् = स्वायत्तीकृतं, राज्यं = वत्सदेशाधिपत्यं, देव्याः = वासवदत्तायाः, कुशलं = क्षेमं पुनरुपलब्धिश्चेत्युभयं यदि = पक्षान्तरे स्यात् = भवेत्, सम्पद्येत तर्हि भवता = त्वया किं नाम हितमिति शेषः, नामेत्यलङ्कृतिर्वाक्यस्य, न कृतं स्यात् = न सम्पादितं भवेत्। श्रीमदस्मत्स्वामिसम्बन्धिनो वत्सराजोदयनस्य राज्येऽत्र समुपागमे न सुतरां प्रसीदयत्यन्तरात्मा मे, राजकन्याश्रीमद्वासवदत्ताविनाशवार्ताव्यतिकरस्मरणेन च भृशं विषीदत्यधुना। दैवेन पुरा प्रतिकूलतां गच्छता वत्सराज्यं रिपुणाऽपहारितम्, साम्प्रतं तेनैवानुकूलतां कलयता पुनरेतदुपस्थापितम्। इदानीं तु यदि नाम राज्यमिव श्रीमतीं वासवदत्तां वत्सराजाद् वियोज्य भयङ्करेण

संयोजयेद् देवम्, तर्हि नूनं सुवर्णे सौरभयोगदानमिव श्रीमतोरुभयोर्महासेनोदयनयोः सर्वतोऽनुष्ठितं भवेद् देवेन हितम्। लब्धमपीदं राज्यं देव्याः कुशलवृत्तान्तस्योपलब्धिं विना नोरसायमानं न तावत्तादृशं तोषमुत्पादयितुं प्रभवतीति भावः। वसन्ततिलकं नामेदं वृत्तम्।

**समासः**—सम्बन्धिनो राज्यं सम्बन्धिराज्यम्। नृपस्य सुता नृपसुता, नृपसुतायाः निधनं नृपसुतानिधनम्।

**प्रश्नः**—

> **पृथिव्यां राजवंश्यानामुदयास्तमयप्रभुः।**
> **अपि राजा स कुशली मया काङ्क्षितबान्धवः॥ ६॥**

**श्लोकोऽयं ससन्दर्भं सप्रसङ्गं च व्याख्येयः।**

**उत्तरम्**—**सन्दर्भः प्रसङ्गनिर्देशश्च**—'स्वप्नवासवदत्त' नाटकस्य षष्ठाङ्कादुद्धृते श्लोकेऽस्मिन् विजयाशंसने कुर्वाणं काञ्चुकीयं तत्रभवतो महासेनभूपतेः कुशलक्षेमादिकं प्रष्टुमिच्छन् राजा सविशेषादरं वचनं ब्रवीति।

**अन्वयः**—आर्य ! पृथिव्यां, राजवंश्यानाम्, उदयास्तमयप्रभुः, मया, काङ्क्षितबान्धवः, स, राजा, अपि, कुशली ?

**व्याख्या**—आर्य ! पृथिव्यां = भूमौ, राजवंश्यानां = राजवंशोद्भवानां राज्ञामिति यावत्, उदयास्तमयप्रभुः = उदयः = उन्नतिः, अस्तमयः = अस्तगमनम् अवनतिश्च तयोः प्रभुः = समर्थः मण्डलेश्वरः सम्राडिति यावत्, मया = कर्त्रेति स्वात्मनो निर्देशः, काङ्क्षितबान्धवः = काङ्क्षितम् = अभीष्टम् बान्धवं = बन्धोर्भावः सम्बन्धः यस्य सः अथवा—मया, सहेति शेषः, काङ्क्षितबान्धवः काङ्क्षितं बान्धवं येन सः, स राजा = पूजनीयः प्रतापी महासेनो नाम भूपतिः, अपि कुशली, अपीति प्रश्नार्थकम्, कुशलमस्यास्तीति कुशली, वर्त्तते कुशलयुक्तो वा ? तुष्टो रुष्टश्च राज्ञां निग्रहानुग्रहं कर्तुं समर्थो यो हि मत्सम्बन्धाय सातिशयं स्पृह्यते, अहं वा यदीयं सम्बन्धमभिलषामि भृशम्। अपि नाम तत्रभवतो मान्यस्य महीपतेः सर्वतः कुशलं वर्तते ? तदेतन्निवेदनीयं भवतेत्याशयः। अनुष्टुप् छन्दः।

**समासः**—वंशे भावः वंश्याः, राज्ञां वंश्याः राजवंश्यास्तेषां राजवंश्यानाम्। उदयश्च अस्तमयश्च उदयास्तमयौ तयोः प्रभुः उदयास्तमयप्रभुः। काङ्क्षितं बान्धवं यस्य सः अथवा काङ्क्षितं बान्धवं येन सः काङ्क्षितबान्धवः।

प्रश्नः—

कातरा येऽप्यशक्ता वा नोत्साहस्तेषु जायते।
प्रायेण हि नरेन्द्रश्रीः सोत्साहैरेव भुज्यते॥ ७॥

श्लोकोऽयं सप्रसङ्गं व्याख्येयः।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—'स्वप्नवासवदत्त' नाटकस्य षष्ठाङ्कादुद्धृते श्लोकेऽस्मिन् कविर्वर्णयति यद् राजानमुदयनं श्रीमन्महासेनसन्देशं श्रावयन् काञ्चुकीयः कथयति—दिष्ट्या परैरपहृतं राज्यं पुनः प्रत्यानीतमिति। कुतः—कातरा इति।

अन्वय—ये, कातरा, अपि वा अशक्ताः, तेषु, उत्साहः, न, जायते, हि, प्रायेण, नरेन्द्रश्रीः, सोत्साहैः, एव, भुज्यते।

व्याख्या—ये = पुरुषाः, कातरा = अधीराः, अपि = वा = अपि च, अशक्ताः = शक्तिरहिताः सन्ति, तेषु = पुरुषेषु, उत्साहः = अध्यवसायः 'उत्साहोऽध्यवसायः स्या' दित्यमरः, न जायते = लब्धावकाशो न भवति, हि = युक्तमेवैतत्, प्रायेण = बहुधा, नरेन्द्रश्रीः = राज्यलक्ष्मीः समृद्धं राज्यसुखमिति यावत्, सोत्साहैः = उत्साहसम्पन्नैरेव पुरुषैः, भुज्यते = आस्वाद्यत इत्यर्थः। शक्तिमन्तोऽप्यधीरा ये, ये च धीरा अप्यशक्ता वर्तन्ते, उभयविधा अप्यमी उत्साहशक्त्या विरहिता भवन्ति। उत्साहस्तु धैर्यं शक्तिं चेत्युभयमप्यपेक्षते, बहुत्रेदं दृश्यते, यदुत्साहेन सम्पन्ना एव राज्यश्रियं भोक्तुं पारयन्ते, अलसानामनुद्यमिनां च राज्यसुखं सर्वथा दुर्लभमिति, सोत्साहं च भवन्तं विजयलक्ष्मीः स्वयं धृतवतीति लब्धराज्यो भवानभिनन्दनीय इत्येव भवन्तमुद्दिश्य श्रीमन्महासेनस्य सन्देशो वर्तत इति भावः। अनुष्टुप् छन्दः।

समासः—न शक्ताः अशक्ताः। नराणां इन्द्र नरेन्द्रः नरेन्द्रस्य श्रीः नरेन्द्र श्रीः। उत्साहेन सहिताः सोत्साहास्तैः सोत्साहैः।

प्रश्नः—

अहमवजितः पूर्वं तावत् सुतैः सह लालितो
दृढमपहृता कन्या भूयो मया न च रक्षिता।
निधनमपि श्रुत्वा तस्यास्तथैव मयि स्वता
ननु यदुचितान् वत्सान् प्राप्तुं नृपोऽत्र हि कारणम्॥८॥

श्लोकोऽयं सप्रसङ्गं व्याख्येयः।

**उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च**—'स्वप्नवासवदत्त' नाटकस्य षष्ठाङ्कादुद्धृते श्लोकेऽस्मिन् कविर्वर्णयति यद् राजा उदयनः श्रीमतो महासेनस्य सन्देशं निशम्य श्रीमन्महासेनप्रभावेणेव सर्वमिदं सम्पन्नम्, अन्यथा दुर्लभविजयावाप्तौ मम का वा शक्ति'रिति भावं विज्ञापयति।

**अन्वयः**—पूर्वं, तावत्, अवजितः, अहं, सुतैः सह, दृढं, लालितः, मया, कन्या, अपहृता, भूयः, च, न, रक्षिता, च तस्याः, निधनं, श्रुत्वा, अपि, तथैव, मयि, स्वता, 'वर्तते', ननु, उचितान्, वत्सान्, प्राप्तुं, यत्, 'मया समर्थेन जातम्', अत्र, नृपो, हि, कारणम्।

**व्याख्या**—पूर्वं = पुरा गजमृगयावसरे, तावत् = अपि, अवजितः = पराजित्य निगृहीतोऽप्यहं, गुणवत्सलत्वात् सुतैः सह = स्वपुत्रैः समं, दृढम् = अत्यर्थं, लालितः = लालनपूर्वकं पालितोऽभवम्, अर्थान्महासेनेन। तदानीं च तत्र तिष्ठता मया = उदयनेन, कन्या = तस्यैव राज्ञो महासेनस्य कुमारी वासवदत्तेति यावत्, अपहृता = अपहरणपूर्वकं ततः स्वं नगरमानीता, भूयः = पुनश्च न रक्षिता = अग्निदाहान्न पालिता। च = किञ्च, तस्याः = स्वकन्यायाः, निधनं श्रुत्वापि = विनाशश्रवणादपीत्यर्थः, तथैव = पूर्ववदेव, मयि = मद्विषये, महासेनस्येति शेषः, स्वता = आत्मीयता वर्तते, 'स्वो ज्ञातावात्मनि एवं त्रिष्वात्मीये' त्यमरः। ननु = निःसंशयं, उचितान्, वत्सान् प्राप्तुम् = मदीयशासनयोग्यं वत्सराज्यं पुनः शत्रोः सकाशात् स्वायत्तीकर्तुं, यत् 'मया समर्थेन जात'मिति शेषः, अत्र = राज्यप्राप्तिक्षमतारूपेऽस्मिन्विषये, नृपो हि = राजा महासेन एव, कारणम् = निमित्तभूतोऽस्तीत्यर्थः। अयमर्थः = पुरा किल गजमृगयापराधमानं बन्दीकृत्यापि मां पुत्रवद् पालितवान् सर्वतो महासेनः। अहञ्च तांस्तदुपकारानवगणय्य कृतघ्नो राजकन्यामपाहरं दैवादग्निना दह्यमानां च तां रक्षितुं नापारयम्। निजात्मजाविनाशवृत्तमिदं विदित्वाऽपि सापराधेऽप्युदारो मयि महासेनोऽद्यापि। तादृशीमेव स्वीयत्वबुद्धिं यदवलम्बते, तदिदं कृतदौर्जन्येऽपि मयि तदीयं सौजन्यमभिनन्दनीयं नाम। यदहं परैरपहृतं पुनरात्मनो राज्यं करगतं कर्तुं समर्थोऽभूवम्, स एव श्रीमन्महा-

सेनस्यैव प्रभुशक्तेर्महीयान् महिमेत्यत्र नास्ति मनागपि संशीतिलेशः। हरिणी-च्छन्दः। 'रसयुगहयैर्न्सौ म्रौ स्लौ गौ यदा हरिणी तदा' इति तल्लक्षणम्।

**समासः**—समस्तपदाभावः।

**प्रश्नः**—

षोडशान्तःपुरज्येष्ठा पुण्या नगरदेवता।
मम प्रवासदुःखार्ता माता कुशलिनी ननु? ॥ ९ ॥

**श्लोकोऽयं सप्रसङ्गं व्याख्येयः।**

**उत्तरम्**—सन्दर्भः प्रसङ्गनिर्देशश्च—'स्वप्नवासवदत्त' नाटकस्य षष्ठा-ङ्कादुधृते श्लोकेऽस्मिन् कविर्वर्णयति यत् काञ्चुकीयमुखात् श्रीमहासेनसन्देशं निशम्य राजा स्वश्वश्र्वाः कुशलं पृच्छति।

**अन्वयः**—षोडशान्तःपुरज्येष्ठा, पुण्या, नगरदेवता, मम, प्रवासदुःखार्ता, माता, कुशलिनी, ननु?

**व्याख्या**—षोडशान्तःपुरज्येष्ठा = षोडशानां = षोडशसंख्याकानाम्, अन्तः-पुराणाम् = अन्तःपुरस्थानां राजभोग्यस्त्रीणां मध्ये, ज्येष्ठा = प्रधानभूता महिषीति यावत् 'स्त्र्यगारं भूभुजामन्तःपुर' मिति कोषादन्तःपुरशब्दो राजमहिलागार वाचकोऽप्यत्र तात्स्थ्याद्राजदारेषूपचरितो बोद्धव्यः, पुण्या = पवित्रचरित्रा, नगर-देवता = पूजनीयत्वान्नगरस्य देवतेव स्थिता, मम = मे, प्रवासदुःखार्ता = प्रवास-दुःखेन = वियोगरूपेण कष्टेन, आर्ता = पीडिता, मातृकल्पा = श्वश्रूरङ्गारवती, कुशलिनी ननु = कुशलयुक्ता वर्तते वा? या किल शुद्धेन चारित्र्येण पूजनीया राजमहिषी नगरदेवतेव मन्यते लोकैः, या च मदीयवियोगदुःखेन दुःखिनी वर्तते तस्याः मातुरङ्गारवत्याः कुशलं विद्यते? इति भावः। अनुष्टुब्वृत्तम्।

**समासः**—षोडशानां अन्तःपुराणां मध्ये ज्येष्ठा षोडशान्तःपुरज्येष्ठा। नगरस्य देवता नगरदेवता। प्रवासस्य दुःखम् प्रवासदुःखम्, तेन आर्ता इति प्रवास-दुःखार्ता।

प्रश्नः—

क: कं शक्तो रक्षितुं मृत्युकाले
रज्जुच्छेदे के घटं धारयन्ति !
एवं लोकस्तुल्यधर्मो वनानां
काले काले छिद्यते रुह्यते च ॥१०॥

श्लोकोऽयं सुस्पष्टं व्याख्येयः। (१९६८, १९७८)

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—'स्वप्नवासवदत्त' नाटकस्य षष्ठाङ्कादुद्धृते श्लोकेऽस्मिन् कविर्वर्णयति यत् महासेनस्य काञ्चुकीयः 'मदपराधादेव वासवदत्ता मृतेति' शोचन्तं राजानं सान्त्वयति यत् मृताऽपि श्रीमती वासवदत्ता सम्प्रतीदमीदृशं श्रीमता स्मरणविषयत्वं नीयमाना ध्रुवं जीवत्येव। अतो वासवदत्तारक्षणविधावक्षमतापि सेयं दैवकृता न भवतश्चिन्तनीयेति भावः।

अन्वयः—मृत्युकाले, कः, कं, रक्षितुं, शक्तः, रज्जुच्छेदे, के, घटं, धारयन्ति, एवम्, वनानां, तुल्यधर्मो, लोकः, काले-काले, छिद्यते, रुह्यते च॥

व्याख्या—मृत्युकाले = आयुषः क्षयस्यावसरे समुपस्थिते, कः=सप्रयत्नोऽपि नरः, कं=प्रीतिपात्रमपि जनं, रक्षितुं= मृत्योः परित्रातुम्, शक्तः = समर्थो भवति, अर्थान्न, आसन्नमृत्युर्म्रियत एव सर्वोऽपीति भावः। रज्जुच्छेदे = रज्जोः = गुणस्य घटबन्धनसमर्थस्य वस्तुन इति यावत्, छेदे = भङ्गे सति, के = पुरुषाः जलमुद्धर्तुमिच्छन्तोऽपि, घटं = रज्जुबलात् कूपमध्ये प्रवेशितं कलशं, धारयन्ति = कूपान्तःपतनान्निवारयितुं पारयन्ति, न केऽपीत्यर्थः। भग्नरज्जुर्घटस्तावत् कूपान्तःपतत्येवेति भावः। यथासमयं दैवादुपनतौ शरीरिणामुत्पत्तिविनाशौ भवत एवेत्याह—एवमिति। एवम् = पूर्वप्रदर्शितप्रकारेण, प्राणिनामदृष्टमात्रैकपरतन्त्रतयेति यावत्, वनानां = अत्र वनपदं तत्रस्थवृक्षोपलक्षकम्, वनस्थानां वृक्षाणामित्यर्थः, तुल्यधर्मः = तुल्यः = समानो धर्मः = वक्ष्यमाणो गुणो यस्य सः तुल्यधर्मः। काले-काले = तत्र तदनुकूले समये छिद्यते = छिन्नो भवति, नश्यति, रुह्यते = रोहयत्युत्पद्यते च। अयम्भावः = भग्नरज्जुर्घटो गतायुश्च पुमान् प्रयत्नशतैरपि केनापि तदानीं नियतंभाविनो विनाशाद्रक्षितुं न शक्येते, दुर्लभस्तत्र सर्वथा पुंप्रयत्नः। वनस्थाः पादपाः यथा यथासमयमुत्पद्यन्ते विनश्यन्ति च, एवमेव, प्राणिनां जन्ममृत्यु

नियतकालभाविनावनिवार्यौ नियतम्। अतश्च 'न मया वासवदत्ता रक्षितुं पारिते'त्येवं चिन्तया नात्माऽनुतापनीयः, कथमसौ दैवाद्विनश्यन्ती रक्षितुं शक्यासीद् भवतेति ॥ शालिनीनामकं छन्दोऽत्र ॥

**समासः**—मृत्योःकालो मृत्युकालस्तस्मिन् मृत्युकाले। रज्जोः छेदो रज्जुच्छेदः। तुल्यो धर्मो यस्य सः तुल्यधर्मः ॥

**प्रश्नः**—

> महासेनस्य दुहिता शिष्या देवी च मे प्रिया।
> कथं सा न मया शक्या स्मर्तुं देहान्तरेष्वपि ॥११॥

**श्लोकोऽयं सप्रसङ्गं व्याख्येयः।**

**उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च**—'स्वप्नवासवदत्त' नाटकस्य षष्ठाङ्कादुद्धृते श्लोकेऽस्मिन् कविर्वर्णयति यत् महासेनस्य काञ्चुकीयः 'मदपराधादेव वासवदत्ता मृतेति' शोचन्तं राजानं सान्त्वयति। ततो राजा दर्शनविषयातीतवासवदत्तास्मरणविषयान्निवारयन्तं काञ्चुकीयं प्रति वासवदत्ताविस्मरणस्य दुःसम्भवत्वं प्रतिपादयति ।।

**अन्वयः**—महासेनस्य, दुहिता, मे, शिष्या, देवी, प्रिया, च, सा, देहान्तरेषु, मया, कथं, स्मर्तुं, न, शक्या ?

**व्याख्या**—महासेनस्य = तन्नाम्नो भूपतेः, दुहिता = कन्या, मे शिष्या = मत्तः सङ्गीतविद्यां शिक्षितवती, देवी = कृताभिषेका महिषी, प्रिया = असाधारणप्रणयास्पदं चेत्येवंगुणाविशिष्टा, सा = अनुभूता वासवदत्ता, देहान्तरेषु = अन्येषु जन्मस्वपि, किं पुनरेतस्मिञ्जन्मनीत्यपि शब्दार्थः, मया = तद्गुणान् जानता, कथम् = केन प्रकारेण, स्मर्तुम् = चिन्तयितुम्, न शक्या = न पार्या। या किल निरतिशयं मयि वात्सल्यं वहतः श्रीमतो महीपतेर्महासेनस्य कन्याऽऽसीत्, यां च विनेयां सपरिश्रमं सङ्गीतविद्यामहं शिक्षितवान्, यया हि मन्महिषीत्वपदं गुणैर्विभूषितं व्यधीयत, यस्यै च प्रेमसर्वस्वाय मे परवशं चेतः सुतरां स्पृहयते स्म, तादृशाऽवर्णनीयगुणविशेषशालिनीं प्रियतमां तां वासवदत्तामस्मिञ्जन्मनि कथमहं विस्मर्तुं शक्नुयाम् ? जन्मान्तरेऽप्यविस्मरणीयं कुतो नाम नाकलनीयं तद्गुणगौरवं गुणज्ञेन मयेति भावः। अनुष्टुब्वृत्तम् ॥

**समासः**—समस्तपदाभावः ॥

प्रश्नः—

वाक्यमेतत् प्रियतरं राज्यलाभशतादपि ।
अपराद्धेष्वपि स्नेहो यदस्मासु न विस्मृतः ॥१२॥

श्लोकोऽयं सप्रसङ्गं व्याख्येयः ।

**उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च**—'स्वप्नवासवदत्त' नाटकस्य पञ्चमाङ्कादुद्धृते श्लोकेऽस्मिन् कविर्वर्णयति यद् धात्रीमुखात् महाराज्ञ्याः श्रीमत्या अङ्गारवत्याः सन्देशभाषितं निशम्य राजा तत् सानन्दं प्रशंसति ॥

**अन्वयः**—एतत्, वाक्यम्, राज्यलाभशतात्, अपि, प्रियतरम्, यत्, अपराद्धेषु, अस्मासु, अपि, 'अन्वया', स्नेहः, न, विस्मृतः ॥

**व्याख्या**—एतद्वाक्यम् = धात्रीमुखेन श्रीमत्या महाराज्ञ्या सूचितं सन्देशवचनमिदम्, राज्यलाभशतादपि = शतशब्दोऽत्र बहुत्वं बोधयति, प्रभूतराज्यप्राप्तेरपि, प्रियतरम् = अतिप्रियं वर्तते, अर्थान्मम । यत्, अपराद्धेष्वस्मासु = बहुत्वमिदमात्मनो गौरवार्थम्, कन्यापहरणादिरूपगुरुतरापराधभाजनेऽपि मयि, अम्बयेति शेषः, जनन्याङ्गारवत्येति तदर्थः, स्नेहः = स्वीयत्वसूचकं वात्सल्यं न विस्मृतः = विस्मृतिं न प्रापितः, अनुसृत इति यावत् । अयमाशयः—प्राप्तानि भूयांस्यपि राज्यानि न तथा मां प्रीणयितुं प्रभवेयुर्यथेदमिदानीं श्वश्रूवाचिकं प्रीणयति । योऽहं तदीयकन्यापहारादिकमक्षम्यापराधजातं कृतवांस्तत्रापि मयि तयोदारचित्तया यत्तावत्तादृशं वात्सल्यं दर्श्यते, तदेतदालोचयन् वचनमुदारमेतदीयमेतस्याः समधिकं रोचये । सर्वथैतादृशमुदारार्थं सन्दिशन्ती श्वश्रूरभिनन्दनीया मयेति । अनुष्टुप् छन्दः ॥

**समासः**—राज्यानां लाभाः राज्यलाभाः, तेषां शतम् राज्यलाभशतम्, तस्माद् राज्यलाभशतात् ॥

प्रश्नः—

अस्य स्निग्धस्य वर्णस्य विपत्तिर्दारुणा कथम् ?
इदं च मुखमाधुर्यं कथं दूषितमग्निना ? ॥ १३ ॥

श्लोकोऽयं सप्रसङ्गं व्याख्येयः ।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—'स्वप्नवासवदत्त' नाटकस्य षष्ठाङ्कादुद्धृते श्लोकेऽस्मिन् कविर्वर्णयति यद् अवन्तिराजमहासेनस्य भट्टिनी प्रेषिता यां चित्रफलकायां वासवदत्ताप्रतिकृतिमवलोक्य स्वान्तिकन्यस्ताऽवन्तिकाकारेण तुलयन्त्याः पद्मावत्याः—'आर्यपुत्र सदृशी खल्वियमार्यायाः' इति वचनमाकर्ण्य प्रियायाः प्रतिकृतेर्दर्शनादुद्बुद्धं विषादभावोदयं दर्शयन् राजा ब्रवीति, स्वकष्टं च विशदयति।

अन्वयः—अस्य, स्निग्धस्य, वर्णस्य, दारुणा, विपत्तिः, 'कथम् अभूत्' च, इदम्, अलौकिकम्, मुखमाधुर्यम्, अग्निना, कथं, दूषितम्?

व्याख्या—अस्य=पुरो दृश्यमानस्य मयाऽनुभूतचरस्येत्यर्थः, स्निग्धस्य=सरसस्य लावण्यपूर्णस्य, वर्णस्य=रूपस्येति यावत्, दारुणा=भीषणा, असदृशीति यावत्, विपत्तिः=विनाशः कथम्=किमिति, अभूदिति शेषः। च=अपि च, इदम्=अलौकिकम्, मुखमाधुर्यम्=मुखस्य=आननस्य, माधुर्यम्=सौन्दर्यमाकर्षकत्वम्, अग्निना=वह्निना, कथम्=केन प्रकारेण, दूषितम्=वैरूप्यं नीतम्, विध्वंसितमित्यर्थः। स्वरूपलावण्यं वदनसौन्दर्यं च दर्शनीयमिदमेतदीयं कथङ्कारमसदृशं विनाशमभ्यगच्छत्? उचितो न चासीत् कमनीयाकृतिर्देहोऽयं दाहविषयीभवितुम्। अनुष्टुब्वृत्तम्॥

समासः—मुखस्य माधुर्यं मुखमाधुर्यम्॥

प्रश्नः—

यदि विप्रस्य भगिनी व्यक्तमन्या भविष्यति।
परस्परगता लोके दृश्यते रूपतुल्यता॥१४॥

श्लोकोऽयं सप्रसङ्गं व्याख्येयः।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—'स्वप्नवासवदत्त' नाटकस्य षष्ठाङ्कादुद्धृते श्लोकेऽस्मिन् कविर्वर्णयति यत् चित्रफलकायां यदा वासवदत्ताया उदयनस्य च प्रतिकृतिमवलोक्य पद्मावती कथयति—'आर्यपुत्र! अस्याः प्रतिकृत्याः सदृशीहैव प्रतिवसति' तदा राजा सञ्जातकौतूहलो वासवदत्तोपलब्धिसम्भावनया तदानयनमादिशति। ततः पद्मावती तदुपस्थितेर्यथावत्प्रकारं प्रदर्शयन्ती अब्रवीत्

यत् 'आर्यपुत्र! मम कन्याभावे केनापि ब्राह्मणेन मम भगिनिकेति न्यासो निक्षिप्तः। प्रोषितभर्तृका परपुरुषदर्शनं परिहरति। तदार्यां मया सहागतां दृष्ट्वा जानात्वार्यपुत्रः'। पद्मावत्याः वचनमाकर्ण्य राजा श्लोकेऽस्मिन् ब्राह्मणभगिनित्वात्तस्या आवन्तिकाया वासवदत्तासादृश्यं तत्रासम्भवम्मन्यमानो ब्रवीति।

**अन्वयः**—यदि, सा, विप्रस्य, भगिनी, तर्हि, व्यक्तम्, अन्या, भविष्यति, लोके, परस्परगता, रूपतुल्यता, दृश्यते।

**व्याख्या**—यदि = चेत्, सेति प्रकरणानुरोधाद् गम्यम्; विप्रस्य = कस्यचिद् ब्राह्मणस्य भगिनी = स्वसा वर्तते तर्हि, व्यक्तम् = स्पष्टम्, अन्या = वासवदत्ताया इतरा काचिद्, भविष्यति = स्यादिति सम्भाव्यते। रूपसादृश्येन तथात्वं शङ्क्यते चेत्, तत्राह—परस्परगतेति। लोके = जगति, परस्परगता = पारस्परिकी, एकस्याः व्यक्तेरन्यया सहेति यावत्, रूपतुल्यता = स्वरूपसादृश्यं दृश्यते अवलोक्यते, प्रत्यक्षमनुभूयते। अत्रैषा न्यासरूपेण स्थापिता यतो ब्राह्मणभगिनीपदमालम्बते, ततो निःसन्देहमसौ काचिद्वासवदत्ताव्यतिरिक्ता भवेत्। ब्राह्मणी सा क्षत्रियराजकुमारी वासवदत्ता कथं स्यात्? रूपेण सादृश्यं हि बहूनां बहुत्र प्रत्यक्षमुपलभ्यते, किन्तु नैतावतोपलब्धं तत्र तादूप्यम्। न हि केवलं रूपसादृश्यं तादूप्यप्रयोजकं भवतीति भावः। अनुष्टुपूछन्दः॥

**समासः**—तुल्यस्य भावः तुल्यता, रूपस्य तुल्यता रूपतुल्यता॥

**प्रश्नः**—

प्रच्छाद्य राजमहिषीं नृपतेर्हितार्थं
कामं मया कृतमिदं हितमित्यवेक्ष्य।
सिद्धेऽपि नाम मम कर्मणि पार्थिवोऽसौ
किं वक्ष्यतीति हृदयं परिशङ्कितं मे॥१५॥

श्लोकोऽयं सप्रसङ्गं व्याख्येयः। (सन् १९६७, ८३)

**उत्तरम्**—सन्दर्भः प्रसङ्गनिर्देशश्च—'स्वप्नवासवदत्त' नाटकस्य षष्ठाङ्कादुद्धृते श्लोकेऽस्मिन् कविर्वर्णयति यद् राज्ञ उदयनस्य मन्त्री यौगन्धरायणो वासवदत्ताप्रच्छादनरिपुगृहीतसकलराज्यपुनःप्राप्तिरूपाणि स्वीयानि कार्याणि विधायाऽपि राजानमुदयनमुपगच्छन् भीतः सन्नात्मगतं कथयति॥

**अन्वयः**—नृपतेः, हितार्थं, राजमहिषीं, प्रच्छाद्य, हितम्, इति, अवेक्ष्य, मया, इदं, कामं, कृतम्, नाम, मम, कर्मणि, सिद्धेऽपि, असौ, पार्थिवः, किं वक्ष्यति, इति मे, हृदयं, परिशङ्कितम्, 'वर्तते' ॥

**व्याख्या** – नृपतेः=स्वामिनो राज्ञ उदयनस्य, हितार्थम्=हिताय, हितमत्र नूतनपद्मावतीविवाहसङ्घटनैकरूपं बोद्धव्यम्. राजमहिषीं=महाराज्ञीं वासवदत्तामिति यावत्, प्रच्छाद्य =वह्नावियं दग्धेति मिथ्याप्रवादप्रचारणपुरःसरं स्वरूपेण संगोप्य हितं=शत्रुहृतराज्यप्रत्याहरणसाधनत्वेन हितकरं, भवेदिति शेषः, इति=इत्थम्, अवेक्ष्य=आलोच्य, मनसि कृत्य, मया=यौगन्धरायणेन, इदं=पद्मावतीसमीपे न्यासरूपेण वासवदत्ताया अवस्थापनं स्वामिना सह परिणयनं चेत्येतत्कार्यद्वयं, कामं=स्वरं यथा स्यात्तथा, कृतम् = सम्पादितम्. नामेति वाक्यालङ्कारे, मम कर्मणि = मत्कृते कार्ये, सिद्धेऽपि = स्वामिनः सन्निधौ शत्रुहृतराज्यप्रापकत्वेन सिद्धिं गतेऽपि, असौ = पुरो दृश्यमानोऽस्मत्स्वामी, पार्थिवः=श्रीमान् राजोदयनः, किं वक्ष्यति = समीचीनमसमीचीनं वाऽभिधास्यति, इति = इत्येवं, मे = मम, हृदयम् = मनः, परिशङ्कितम् = परिशङ्काकुलं वर्तते । 'प्रणयविशेषशालिन्यां वासवदत्तायामवस्थितायां न कदापि राज्ञे परिणयान्तरमात्मनो रोचेत, संवृत्ते च पद्मावत्या समं परिणये श्रीमन्महासेनमहीपालसहायकलाभेन शत्रुं पराजित्य राजा परायत्तमात्मनो राज्यं पुनः स्वायत्तीकर्तुं प्रभवे'दित्येवं भाविशुभोदर्कमर्थं पर्यालोच्य सिद्धादेशप्रत्ययादहं श्रीमन्महाराज्ञीं वासवदत्तां 'वह्नावियं दग्धे'ति मिथ्याप्रवादविषयीभूतां तदभिन्नरूपवेषामावन्तिकारूपेण पद्मावत्याः समीपे 'मदागमनं यावन्न्यासोऽयमभिरक्षणीय' इत्येवं निगद्य सम्यङ् निक्षिप्तवान् । कालेन पद्मावत्यां परिणीतायां प्राप्तायां च परहस्तगतायां राज्ञा विजयिन्या राजलक्ष्म्यां, 'यद्यपि मे सम्पूर्णं कार्यं सफलतामभ्यगच्छत्तथापि यन्मया 'वासवदत्तोपरतेत्यलीकवार्ताप्रख्यापनपुरःसरमात्मनो भगिनीत्वेन निर्दिश्य सा परहस्ते न्यासीकृता, तमेतं विषयमनुचिन्त्य 'श्रीमान् वत्सराजोऽयं कार्यमिदं मदीयमुचितमनुचितं वा, तदर्थं च साध्वसाधु किं वाऽभिधास्यति मा' मित्येवमिदानीं बलवती मे शङ्का वर्तत इति भावः । वसन्ततिलकं छन्दः ।

**समासः**—राज्ञः महिषी राजमहिषी तां राजमहिषीम् ॥

भारतानां कुले जातो विनीतो ज्ञानवाञ्छुचिः ।
तन्नार्हसि बलाद्धर्तुं राजधर्मस्य देशिकः ॥१६॥

श्लोकोऽयं सप्रसङ्गं व्याख्येयः ।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—'स्वप्नवासवदत्त' नाटकस्य षष्ठाङ्कादुद्धृते श्लोकेऽस्मिन् कविर्वर्णयति यत् परिव्राजकवेषधारी यौगन्धरायणः न्यासरूपेण पद्मावत्याः सकाशे निक्षिप्तां आवन्तिकावेषधारिणीं वासवदत्तां प्रतिगृहीतुं समागतः । तदा महासेनस्य धात्री आवन्तिकां सम्यगवलोक्य विस्मयेन कथयति—'अम्मो ! भर्तृदारिका वासवदत्ता !' इति । प्रियां च प्रत्यभिज्ञाय तां गृहान्तःप्रवेष्टुमाज्ञापयति । यौगन्धरायणश्च गृहान्तः प्रवेशाद् यौगन्धरायणं निवारयन् ब्रूते—भारतानामिति ।

अन्वयः—भारतानां, कुले, जातः, विनीतः, ज्ञानवान्, शुचिः, राजधर्मस्य, देशिकः, 'असि', तत्, 'इमां', बलात्, हर्तुं, न, अर्हसि ॥

व्याख्या—भारतानां = भरतकुलजानां राज्ञां पाण्डवानामिति यावत्, कुले = वंशे, जातः = गृहीतजन्मा, विनीतः = शिक्षितो नम्रः, ज्ञानवान् = सदसद्विवेकशीलो बुद्धिमान्, शुचिः = पवित्राचारो निर्मलान्तःकरणो राजधर्मस्य = राजोचितकर्तव्यस्य, देशिकः = प्रवर्तक आचार्यश्च असीति शेषः । तत् पूर्वोक्तविशेषणविशिष्टत्वाद्धेतोः, इमामिति शेषः, ममैतां भगिनीं परकीयामिति यावत्, बलात् = हठात्, हर्तुं = ग्रहीतुमात्मसात्कर्तुं, नार्हसि = न योग्योऽसि त्वम् । भरतकुलजस्य विनयज्ञानशालिनः शुचेः राजधर्मोपदेशकस्य च सर्वथेदमसदृशं ते, यदिदं प्रसह्य परकीयापहारचेष्टितं नाम । न चैतच्छोभते नरपतेर्विशेषतो भरतवंशीयत्वादिगुणगणविशिष्टस्य । परकीयवस्तुनोऽपहार एतादृशस्त्वादृशैर्निवारणीयो न किल स्वयमेव प्रवर्तनीय इति भावः । वृत्तमनुष्टुप् ।

समासः—राज्ञःधर्मो राजधर्मस्तस्य राजधर्मस्य ।

प्रश्नः—

किन्तु सत्यमिदं स्वप्नः सा भूयो दृश्यते मया ।
अनयाऽप्येवमेवाऽहं दृष्ट्या वञ्चितस्तदा ॥ १७ ॥

श्लोकोऽयं सप्रसङ्गं व्याख्येयः।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—'स्वप्नवासवदत्त' नाटकस्य षष्ठाङ्कादुद्धृते श्लोकेऽस्मिन् कविर्वर्णयति यद् वासवदत्तायाः स्वरूपप्रकाशनानन्तरं राजा सविस्मयं ब्रवीति वासवदत्ताविषयकं दर्शनमुद्दिश्य राज्ञो वितर्कवचनमेतत्।

अन्वयः—इदं, किन्तु, सत्यम्? किन्तु स्वप्नः? सा भूयः, मया दृश्यते, अहम्, तदा, एवमेव, दृष्ट्या, अपि, अनया, वञ्चितः।

व्याख्या—इदम् = वासवदत्तायाः प्रत्यक्षं दर्शनमेतत्, किन्तु सत्यम् = यथार्थम्, किन्तु स्वप्नः = स्वप्नरूपमयथार्थं वा वर्तते। सा = पूर्वं समुद्रगृहे दृष्टा प्रियतमा वासवदत्ता, भूयः = पुनरस्मिन् समये, मया = उदयनेन दृश्यते = दर्शनविषयीक्रियते। सत्येऽपि दर्शनविषयेऽसत्यत्वसम्भावना कथमिति तत्प्रयोजकं प्राक्तनानुभवमात्मनो दर्शयति—अनयेति। अहम् = उदयनः, तदा = तस्मिन् समुद्रगृहावस्थानसमये, एवमेव = अमुनैव प्रकारेण, दृष्ट्या = जाग्रदवस्थायां नयनयोः पुरस्तादुपस्थितयाऽपि, अनया = वासवदत्तया, वञ्चितः = स्वरूपान्तर्धानेन प्रतारितः, अभूवमिति शेषः। साम्प्रतिकं वासवदत्तादर्शनं तात्त्विकमतात्त्विकं वा? अपि नाम सफलमेतन्निष्फलं वा भवेत्? यथेयमिदानीं दृश्यते, नूनं तथैव पद्मावत्या अस्वस्थताप्रवृत्तिमधिकृत्य समुद्रगृहान्तर्गतेन शयनं प्राप्तेन पुरा दृष्टासीन्मया। दृष्टिगोचरतां प्रयाताऽपि तदा तत्क्षणमेवाऽदर्शनं गतवती दुर्दैवान्निराशं वितन्वती मां प्रतारितवती खल्वसौ। अधुनाऽपि तादृगेव किमहमेतया न प्रतार्येय? तदानीं तद्विवेदानीमिदपि दर्शनं क्षणिकं सत् फलविधौ शून्यं तु न स्यात् किमु। दुग्धदग्धाननस्य पुनर्दधिभक्षण इव दर्शनेऽस्मिन् शङ्का मे भवितुमर्हतीति भावः। अनुष्टुप् छन्दः।

समासः—समस्तपदाभावः।

प्रश्नः—

मिथ्योन्मादैश्च युद्धैश्च शास्त्रदृष्टैश्च मन्त्रितैः।
भवद्यत्नैः खलु वयं मज्जमानाः समुद्धृताः॥ १८॥

श्लोकोऽयं सप्रसङ्गं व्याख्येयः। (सन् १९६१)

**उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च**—'स्वप्नवासवदत्त' नाटकस्य षष्ठाङ्कादुद्धृते श्लोकेऽस्मिन् कविर्वर्णयति यद् राजा उदयनः स्वामिभक्तस्य यौगन्धरायणस्य कृतपूर्वाण्यसाधारणानि कार्याणि स्मरन् प्रियापनयनमपीदं तत्कृतं शुभोदर्कमनिक्षिपन्नपराधपक्षे पादयोः पतितं तं स्नेहादुत्थाप्य प्रशंसति। पुनश्च सः तमेव यौगन्धरायणमुपकारिणं कृतज्ञताप्रकाशनपुरःसरं पुनः प्रशंसत्यभिधया वृत्त्या—मिथ्योन्मादैरिति।

**अन्वयः**—मज्जमानाः, वयम्, मिथ्योन्मादैः, च, युद्धैः, च, शास्त्रदृष्टैः, मन्त्रितैः, च, तथा, भवद्यत्नैः, खलु, समुद्धृताः।

**व्याख्या**—मज्जमानाः = मज्जनशीलाः, वयम् = अवरोधबन्धनरूपे दुस्तरे विपत्सिन्धौ मग्नोऽहमिति यावत्। मिथ्योन्मादैः = कल्पितैरसत्यैश्चित्तविभ्रमैः 'उन्मादश्चित्तविभ्रम' इति कोषः, चित्तविभ्रमश्च चेतसोऽनवस्थितिरेव युद्धैः= प्रवर्तितैः सङ्ग्रामैः, शास्त्रदृष्टैः = राजनीतिसिद्धान्तानुकूलैः मन्त्रितैः=गूढविचारैश्च तथा भवद्यत्नैः = भवतो = यौगन्धरायणस्य यत्नैः = यैस्तैरितरैरस्मदुद्धारकारणीभूतैरनुरूपैर्व्यागविशेषैः, खलु=निःसंशयम्, समुद्धृता = विपत्सागराद् बहिर्निष्कासिता अभूम। अनुष्टुप् छन्दः॥

**समासः**—मिथ्यैवोन्मादाः मिथ्योन्मादास्तैः मिथ्योन्मादैः। शास्त्रे दृष्टाः शास्त्रदृष्टास्तैः शास्त्रदृष्टैः। भवतो यत्नो भवद्यत्नस्तैः भवद्यत्नैः।

**प्रश्नः**—

**इमां सागरपर्यन्तां हिमवद्विन्ध्यकुण्डलाम्।**
**महीमेकातपत्राङ्कां राजसिंहः प्रशास्तु नः॥ १९॥**

**श्लोकोऽयं सप्रसङ्गं व्याख्येयः।**

**उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च**—'स्वप्नवासवदत्त' नाटकस्य षष्ठाङ्कादुद्धृते श्लोकेऽस्मिन् कविर्वर्णयति यद् द्वितीयप्रेयसीप्राप्तिद्वारेण सपत्नोन्मूलनपुरःसरं पुना राज्यलाभे प्रधानप्रियतमासमागमे च नायकस्य सञ्जाते उपसंहारं गते सति सकले नाटकीयसंविधानके, समाप्तौ मङ्गलार्थं भरतवाक्यं प्रदर्श्य नाटकमिदं समापयिष्यते। एषा च प्रशस्तिरनुकर्तृभिर्भरतस्य ( नटस्य ) श्रीमतो नाट्याचार्यस्य

वा वाक्यत्वेन प्रतिपादिता भवतीति यौगन्धरायणमुखेन तदेव भरतवाक्यं प्रदर्श्यते कविना—इमामिति ॥

अन्वयः—नः, राजसिंहः, इमाम्, सागरपर्यन्ताम्, हिमवद्विन्ध्यकुण्डलाम्, एकातपत्राङ्कां, महीम्, प्रशास्तु ॥

व्याख्या—नः=अस्माकम्, राजा सिंह इव सिंहः=नृपतिवरः, इमाम्=परिपालनीयाम् निखिलाम्, सागराः=समुद्राः पर्यन्तः=अन्तिमः सीमा यस्याः सा ताम्=समग्रामिति यावत्। हिमवद्विन्ध्यकुण्डलाम्=हिमवान्=हिमालयः विन्ध्यश्चेति पर्वतावेव कुण्डले=कर्णवेष्टनसंज्ञकालङ्कारविशेषौ यस्याः सा तां हिमवद्विन्ध्यकुण्डलाम्=हिमवद्विन्ध्यभूभृतावुत्तरदक्षिणदिशोः सीमाभूताविति पृथिव्याः कुण्डलाकारत्वेन कल्पितावत्र, एकातपत्राङ्काम्=एकम्=अद्वितीयं=आतपत्रं=श्वेतच्छत्ररूपम्, अङ्को=राज्यलक्ष्मीत्वसूचकं चिह्नं यस्यां सा तां एकातपत्राङ्काम्, महीम्=पृथिवीम्, प्रशास्तु=प्रकर्षेण पालयतु। या किल चरम-सीमारूपान् सकलान् समुद्रान् व्याप्य स्थिता वर्तते, पुण्यभूमेरार्यावर्तस्य दक्षिणो-त्तरदिक्सीमाभूतेन विन्ध्येन हिमवता च यस्याः सुषमाविशेषः समन्ततः स्तीर्यते, यत्र चैकाधिपत्यसूचकं तत्सितच्छत्रमेकमुद्द्योतते, समस्तां तां पृथिवीं निष्कण्टकम-स्माकं राजाधिराजः श्रीमानुदयनश्चिरं परिपालयतादित्यर्थः। अनुष्टुब्वृत्तम् ॥

समासः—राजा सिंह इव राजसिंहः। सागराः पर्यन्ताः पर्यन्ते वा यस्याः सा तां सागरपर्यन्ताम्। हिमवांश्च विन्ध्यश्च हिमविन्ध्यौ तौ कुण्डले इव यस्याः सा हिमवद्विन्ध्यकुण्डला तां हिमवद्विन्ध्यकुण्डलाम्। एकम् आतपत्रम् अङ्को यस्याः सा एकातपत्राङ्का तां एकातपत्राङ्काम् ॥

॥ इति षष्ठोऽङ्कः ॥

# गद्यांशव्याख्यात्मकप्रश्नोत्तरखण्डम्

## प्रथमोऽङ्कः

**प्रश्नः**—भोः ! श्रूयताम् । एषा खलु गुरुभिरभिहितनामधेयस्याऽस्माकं महाराजदर्शकस्य भगिनी पद्मावती नाम । सैषा नो महाराजमातरं महादेवीमाश्रमस्थामभिगम्यानुज्ञाता तत्रभवत्या राजगृहमेव यास्यति । तदद्यास्मिन्नाश्रमपदे वासोऽभिप्रेतोऽस्याः ।

गद्यांशस्याऽस्य सप्रसङ्गं भावार्थः प्रकाशनीयः ।

( सन् १९६८, ७०·ई० )

**उत्तरम्**—सन्दर्भः प्रसङ्गनिर्देशश्च—महाकविभासप्रणीतस्य 'स्वप्नवासवदत्त' नाटकस्य प्रथमाङ्कादुद्धृते गद्यांशेऽस्मिन् कविः प्रथमाङ्के उत्सारणकाले 'भोः किङ्कृतेयमुत्सारणा ?' इति पृष्टे यौगन्धरायणे काञ्चुकीयस्योत्तरं प्रदर्शयति ।

**भावार्थः**—प्रथमाङ्के काञ्चुकीयः यौगन्धरायणम्प्रति कथयति यत् भोस्तपस्विन् ! सावधानतयाऽऽकर्ण्यताम् । दर्शकनामाभिधस्याऽस्माकं महाराजस्य भगिनी खल्वियं पद्मावती नाम । इयं आश्रमनिवासिनीं महादेवीनामाभिधेयां नो महाराजमातरमभिगम्य तदनुज्ञां चावाप्य पुनः राजभवनमेव गमिष्यति । अतोऽद्यैतस्याः निवासोऽस्मिन्नाश्रम एव निर्धारितोऽस्तीति ।

**प्रश्नः**—यदभिप्रेतम्भवत्या । भो भोः आश्रमवासिनस्तपस्विनः ! शृण्वन्तु शृण्वन्तु भवन्तः, इहात्रभवती मगधराजपुत्री अनेन विस्रम्भेणोत्पादितविस्रम्भा धर्मार्थमर्थेनोपनिमन्त्रयते ।

गद्यांशस्याऽस्य सप्रसङ्गं भावार्थो लेख्यः ।

**उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च**—'स्वप्नवासवदत्त' नाटकस्य प्रथमाङ्कादुद्धृते गद्यांशेऽस्मिन् कविर्वर्णयति यद् मगधराजपुत्री पद्मावती काञ्चुकीयं कथयति—'आर्य ! किं दृष्टो मुनिजन आत्मानमनुग्रहीतुम् ? अभिप्रेतप्रदानेन तपस्विजन उपनिमन्त्र्यताम् तावत् कः किमत्रेच्छतीति' तदनुसारं काञ्चुकीय उद्घोषयति ।

**भावार्थः**—काञ्चुकीयः कथयति यत्—भवत्या इच्छानुसारेणैव मया सम्प्रत्युद्घोष्यते । हे आश्रमवासिनस्तपस्विजनाः ! सावधानतया श्रृण्वन्तु भवन्तः । अत्राऽऽश्रमे प्रवेशसमये तापस्या समाचरितपूर्वेण सत्कारेण लब्धविश्वासा पूजनीया राजकुमारी पद्मावती भवन्मनोरथान् पूरयितुं धर्माचरणबुद्ध्या भवतस्तपोवनात् निजाभिलषितार्थप्रकाशनाय प्रवर्तयति । अतः स्वस्वाभिलाषं प्रकटयितुं प्रसीदन्तु भवन्तः इति भावः ।

**प्रश्नः—आर्य ! प्रथममुद्घोष्य कः किमिच्छतीत्ययुक्तमिदानीं विचारयितुम् । यदेष भणति, तदनुतिष्ठत्वार्यः ।**

**गद्यांशस्याऽस्य सप्रसङ्गं भावार्थः प्रतिपादनीयः ।**

**उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च**—'स्वप्नवासवदत्त' नाटकस्य प्रथमाङ्कादुद्धृते गद्यांशेऽस्मिन् कविर्वर्णयति यत् तत्रभवत्या राजकुमार्या 'कः किमिच्छती'त्युद्घोषिते यौगन्धरायणः आवन्तिकावेषधारिणीं उदयनपत्नीं वासवदत्तां स्वभगिनीत्वेनोपस्थाप्य पद्मावत्याः सकाशं न्यासरूपेण स्थापयितुं कामयते तदा यौगन्धरायणाभिलाषपूरणं दुष्करं सम्भाव्य प्रतिज्ञातपूर्वात्तदर्थात् पराङ्मुखीभवतः काञ्चुकीयस्य विचारं परिवर्तयितुमुद्यता पद्मावती कथयति यत्—आर्येत्यादि ।

**भावार्थः**—पद्मावती कथयति यत् पूर्वं कः किमिच्छति ? कस्य कीदृशोऽभिलाषः ? स किल निःशङ्कं प्रकटनीयः इत्येवमुद्घोषणां विधाय तदभिलाषश्रवणानन्तरञ्च तत्पूरणस्य दुष्करत्वमाकलय्य किमपि तत्रार्थे विचिन्तयितुं नोचितम् । अतः एषः (यौगन्धरायणो) यादृशमभिलाषं प्रकाशयति स किल भवता पूरयितुं स्वीकर्तव्यः । 'अर्थिनः सर्वोऽप्यर्थोऽवश्यं पूर्येतास्माभि'रित्यत्र प्रतिज्ञातचरे विषये 'अङ्गीकृतं सुकृतिनः परिपालयन्ती'त्यविचारितं प्रवर्तितव्यम् । अत एव यौगन्धरायणाभिलाषस्य पूरणं कर्तव्यमेव ।

प्रश्नः—हन्त भोः ! अर्धमवसितं भारस्य । यथा मन्त्रिभिः सह समर्थितम्, तथा परिणमति । ततः प्रतिष्ठिते स्वामिनि तत्रभवतीमुपनयतो मे इहात्रभवती मगधराजपुत्री विश्वासस्थानं भविष्यति ।

गद्यांशस्याऽस्य सप्रसङ्गं भावार्थः प्रकाशनीयः ।

उत्तरम्–सन्दर्भः प्रसङ्गनिर्देशश्च—'स्वप्नवासवदत्त' नाटकस्य प्रथमाङ्कादुद्धृते गद्यांशेऽस्मिन् यौगन्धरायणः योग्यस्थले—पद्मावत्याः सकाशे वासवदत्तां न्यासरूपेण निक्षिप्य लब्धनिर्वृत्तिश्चित्त पर्यालोचयति ।

भावार्थः—वासवदत्तायाः पद्मावत्याः सकाशे निक्षेपानन्तरं यौगन्धरायण आत्मगतं कथयति यत् 'विपक्षापहृतं स्वामिनो राज्यमधिकरिष्यामी'ति कृतप्रतिज्ञस्य तदुचितेषु कर्तव्येषु वासवदत्तानिक्षेपलक्षणं गुरुतरं कार्यं सम्पादितवतो मे शिरसोऽवतीर्णः साम्प्रतं स्वावलम्बितस्य भारस्याऽयमर्धभागः । सम्पादितस्य कार्यस्याऽर्धत्वं च पद्मावतीविवाहसम्बन्धसङ्घटनप्रभृतिकरणीयकार्यान्तरापेक्षया बोद्धव्यम् । रुमण्वदादिभिर्मन्त्रिभिः सार्धं येन प्रकारेण कार्यं कर्तुमवधारितम् तथैव नूनमिदानीं कार्यस्य फलवत्ता दृश्यते । क्रमेण च निजं राज्यसिंहासनमधिरूढेन स्वामिनोदयनेन सह वियोगिनीं वासवदत्तां योजयिष्यन्नहं वासवदत्ताचरित्रस्य निर्दोषताविषये पद्मावतीमेव साक्षिणीं कर्तुं प्रभविष्यामीति भावः ।

प्रश्नः—ततः प्रतिनिवृत्तो राजा तद्वृत्तान्तं श्रुत्वा तयोर्वियोगजनितसन्तापस्तस्मिन्नेवाग्नौ प्राणान् परित्यक्तुकामोऽमात्यैर्महता यत्नेन वारितः ।

गद्यांशस्याऽस्य सप्रसङ्गं भावार्थो लेख्यः ।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च–स्वप्नवासवदत्त' नाटकस्य प्रथमाङ्कादुद्धृते गद्यांशेऽस्मिन् कविः ब्रह्मचारियौगन्धरायणयोर्वार्तालापं वर्णयति । ब्रह्मचारिणा उक्तम् यत् सः राजगृहादागतः । वत्सराज्यान्तर्गतलावाणकनामाभिधेये ग्रामे अग्निदाहेन वासवदत्ता मृता यौगन्धरायणश्च मृत इति वृत्तान्तस्तेन वर्णितः । गद्यांशेऽस्मिन् सोऽग्रिमं वृत्तान्तं श्रावयति ।

**भावार्थः**—प्रथमाङ्के ब्रह्मचारी कथयति यत् मृगयातः प्रत्यागमनानन्तरं वासवदत्तायौगन्धरायणयोर्दाहविषयकं वृत्तमुपलभ्य तदुभयोर्विरहेण सन्तप्यमानं, दुःसहत्वेन शोकावेगस्य तत्रैव दहने निपत्य प्राणपरित्यागोत्सुकं राजानमुदयनं कथमप्यतिप्रयासेन रुमण्वदादयो मन्त्रिणो दहनप्रवेशतो न्यवारयन् ।

**प्रश्नः**—तदिदानीं न जाने । इह तया सह हसितम्, इह तया सह कथितम्, इह तया सह पर्युषितम्, इह तया सह कुपितम्, इह तया सह शयितम्' इत्येवं तं विलपन्तं राजानममात्यैर्महता यत्नेन तस्माद् ग्रामाद् गृहीत्वापक्रान्तम् । ततो निष्क्रान्ते राजनि प्रोषितनक्षत्रचन्द्रमिव नभोऽरमणीयः संवृत्तः स ग्रामः । ततोऽहमपि निर्गतोऽस्मि ।

**गद्यांशस्याऽस्य सप्रसङ्गं भावार्थः प्रकाशनीयः । ( सन् १९६९ )**

**उत्तरम्**—**सन्दर्भः प्रसङ्गनिर्देशश्च**—'स्वप्नवासवदत्त' नाटकस्य प्रथमाङ्कादुद्धृते गद्यांशेऽस्मिन् कविः ब्रह्मचारियौगन्धरायणयोर्वार्तालापं वर्णयति । 'यौगन्धरायणेन समयेऽस्मिन् विकारपरिहारेण पूर्ववत् स्वस्थतां प्रापितो वा मन्त्रिभिर्भूपतिर्न वेति' पृष्टे सति ब्रह्मचारी उत्तरयति ।

**भावार्थः**—ब्रह्मचारी कथयति यद् राज्ञः स्वस्थताविषये किमपि साम्प्रतं निश्चितं नावगच्छामि । अस्मिन् स्थाने मया वासवदत्तया सहोपहासः कृतः, अत्र तया सह वार्तालापो विहितः, इह तया सह मया निवासः कृत, इह मया तया सह प्रणयकोपः कृतः, अत्रात्र प्रदेशे च तया साकं मया शयनं कृतम्' इति रुदन्तं राजानं महता प्रयत्नेनादाय रुमण्वदादयोऽवसरचतुरा मन्त्रिणो तस्माद् लावाणकग्रामान्निर्जग्मुः । लावाणकग्रामाद्राज्ञो निर्गमनानन्तरं राज्ञा मन्त्रिभिश्च-विरहितस्य लावाणकग्रामस्य शोभा तदानीं तथैव विनष्टाऽभूद् यथा चन्द्रमसा नक्षत्रैश्च विहीनमाकाशं न शोभते । राजादिनिर्गमनेन ग्रामस्य निःश्रीकतया तत्र वस्तुमनिच्छता मयापि तस्माद् ग्रामात् प्रस्थानं विहितम् । प्रस्थितश्चाऽहमध्वपरिश्रान्तो विश्रामाभिलाषादत्रोपस्थितोऽस्मि भवत्सन्निधिम् । नूनमिदमेव निमित्तं वर्तते विद्याध्ययनं पूर्णीकृत्यैव [illegible] करोमि ।

## द्वितीयोऽङ्कः

प्रश्नः–कुञ्जरिके ! कुञ्जरिके ! कुत्र कुत्र भर्तृदारिका पद्मावती? किं भणसि, एषा भर्तृदारिका माधवीलतामण्डपस्य पार्श्वतः कन्दुकेन क्रीडतीति। यावद् भर्तृदारिकामुपसर्पामि। [परिक्रम्यावलोक्य] अम्मो ! इयं भर्तृदारिका उत्कृतकर्णचूलिकेन व्यायामसञ्जातस्वेदबिन्दुविचित्रितेन परिश्रान्तरमणीयदर्शनेन मुखेन कन्दुकेन क्रीडन्तीत एवागच्छति। यावदुपसर्पामि ॥

गद्यांशस्याऽस्य सप्रसङ्गं भावार्थो लेख्यः।

उत्तरम्–सन्दर्भः प्रसङ्गनिर्देशश्च–'स्वप्नवासवदत्त' नाटकस्य द्वितीयाङ्कादुद्धृते गद्यांशेऽस्मिन् कविः कन्दुकक्रीडासंलग्नायाः पद्मावत्याश्चेतसि सञ्जातं प्रथमाङ्कसूचितोदयनविषयाभिलाषं परिपोषयन् सुन्दरतमसखीसंलापभङ्ग्या प्रकाशयिष्यंस्तदनुरूपं चेट्याः प्रवेशं दर्शयति। प्रविष्टा चेयं चेटी स्वजातीयाया अपरस्याश्चेट्या नामोल्लेखपुरःसरं प्रसङ्गानुकूलं वचनमुपन्यस्यति।

भावार्थः—चेटी कथयति यत्—हे कुञ्जरिके ! कथय, कस्मिन् प्रदेशेऽधुना वर्तते श्रीमती पद्मावती नाम राजकुमारी ? किं कथयसि ? अनुक्तमप्युत्तरं प्राप्तमिवेति दर्शयन्ती चेटी पुनः ब्रवीति—इयं राजकुमारी तत्रभवती पद्मावती माधवीलतानिर्मितमण्डपसमीपे कन्दुकक्रीडां कुर्वाणा वर्तते। आर्या पद्मावत्यस्मिन् प्रदेशे क्रीडन्ती वर्तते, अतो हेतोरहमधुना तस्याः समीपं गच्छामि। इतस्ततो गत्वाऽन्विष्य अवलोक्य दृष्टिपथं नीत्वा पद्मावतीं पुनश्चेटी वक्ति—अहो ! इयं राजकुमारी तु कन्दुकक्रीडावसरे लम्बनपतनभयात्कर्णयोरुपरिष्टात् कृते कर्णचूलिके यत्र मुखे तथाभूतेन, व्यायामसञ्जातस्वेदबिन्दुविचित्रितेन—व्यायामात् कन्दुकादानप्रदानविधौ धावनादिसमुत्थितादायासात् सञ्जाताः समुत्पन्नाः ये स्वेदस्य घर्मोदकस्य बिन्दवः पृषताः तैः विचित्रितेन सुषमावैचित्र्यं प्रापितेन परिश्रान्तरमणीयदर्शनेन मुखेन कन्दुकक्रीडाभिर्मनो विनोदयन्ती तत्र भवती पद्मावतीहैव समागच्छति। इयमधुना तत्समीपमहं गच्छाम्येवेति भावः।

## तृतीयोऽङ्कः

प्रश्नः—विवाहामोदसङ्कुले अन्तःपुरश्चतुश्शाले परित्यज्य पद्मावतीमिहागतास्मि प्रमदवनम्। यावदिदानीं भागधेयनिर्वृत्तं दुःखं विनोदयामि। (परिक्रम्य) अहो अत्याहितम्। आर्यपुत्रोऽपि नाम परकीयः संवृत्तः। यावद् उपविशामि। [उपविश्य] धन्या खलु चक्रवाकवधूः, याऽन्योन्यविरहिता न जीवति। न खल्वहं प्राणान् परित्यजामि। आर्यपुत्रं पश्यामीत्येतेन मनोरथेन जीवामि मन्दभागा।

गद्यांशस्याऽस्य सप्रसङ्गं भावार्थः प्रकाशनीयः। (१९६९)

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—'स्वप्नवासवदत्त' नाटकस्य तृतीयाङ्कादुद्धृते गद्यांशेऽस्मिन् कविः सुन्दरतमसखीसंलापमुखेन द्वितीयाङ्के सूचितं प्रियतमोदयनस्य विवाहसम्बन्धं पद्मावत्या समं निश्चितमवगत्य तद्धेतुकं चिन्तानुभावं नाटयन्त्याः पद्मावतीकौतुकमालिकागुम्फने नियोक्ष्यमाणायाः वासवदत्तायाः समुचितं प्रवेशं वर्णयति। अत्र कविः वासवदत्तायाः मनोगतं वितर्कं प्रतिपादयति।

भावार्थः—विचिन्तयन्ती वासवदत्ता कथयति यत्—विवाहामोदेन बान्धवजनाभिनीतेन पद्मावतीपरिणयानन्देन सङ्कुले विवाहमहोत्सवशालिनि अन्तःपुरचतुःशाले तत्रभवतीं भर्तृदारिकां पद्मावतीं परित्यज्य अत्र प्रमदवनेऽस्म्यागता। चतुःशालं हि परस्पराभिमुखीनां शालानां चतुष्टयेन संयुक्तं सदनमुच्यते। प्रमदवनञ्च अन्तःपुरविहारोचितमुद्यानम्। अन्तःपुरे पद्मावत्या अवस्थानं तु वरागमनप्रतीक्षामूलकम्। तत्र च बहुजनाकीर्णे वासवदत्तायाः प्रच्छन्नरूपाया अवस्थातुमनौचित्येन प्रमदवनप्रस्थानं युज्यते। तह्यधुना दुर्दैवलब्धं आर्यपुत्रानवाप्तिरूपं दुःखमपनेष्यामि। कतिचित् पदानि गत्वा वासवदत्ता पुनः कथयति—अहो! महत्कष्टम्। आर्यपुत्रोऽपि नाम परकीयः—अन्यस्याः पद्मावत्याः सम्बन्धी पतिरिति यावत् संवृत्तः। मय्यनुरागबाहुल्यं वहतोऽप्यार्यपुत्रस्य पद्मावतीप्रियतमभावो मे महते विस्मयाय कष्टाय चेति। भवतु तिष्ठामि। क्वचित् प्रदेशे स्थितिं कृत्वा वासवदत्ता पुनः प्रियवियोगिनीं जीवन्तीमात्मानं निन्दती कथयति यत्—अभिनन्दनीया खलु, चक्रवाकवधूः, या परस्परं वियुक्ता न जीवति, प्राणांस्त्यक्तुं चेष्टते इत्यर्थः। न खल्वहं प्राणान् त्यजामि। 'एकाकिनी चक्रवाकी जीवितुं' नोत्सहमाना

नूनं प्रशंसनीया, अहन्तु प्रियवियुक्तापि जीवन्ती निन्दनीयास्मीति तिर्यग्जातितोऽपि हीनमात्मानं मन्यते वासवदत्ता। पुनश्च जीवने कारणमाह वासवदत्ता यत्—पद्मावतीविवाहप्रसङ्गेन समागत आर्यपुत्रो नूनं नयनगोचरतां गच्छेदित्याशातन्तुरेव प्रियावियोगदशायां वासवदत्ताया मम जीवनेऽवलम्बनमस्ति। वियोगे किल प्राणिनां प्रियजनसमागमप्रत्याशयैव किमपि समाश्वासनं भवतीति भावः।

## चतुर्थोऽङ्कः

प्रश्नः—भोः दिष्टया तत्रभवतो वत्सराजस्याभिप्रेतविवाहमङ्गलरमणीयः कालो दृष्टः। भोः! को नामैतज्जानाति—तादृशे वयमनर्थसलिलावर्ते प्रक्षिप्ताः पुनरुन्मङ्क्ष्याम इति। इदानीं प्रासादेषूष्यते, अन्तःपुरदीर्घिकासु स्नायते, प्रकृतिमधुरसुकुमाराणि मोदकखाद्यानि खाद्यन्त इत्यनप्सरस्संवास उत्तरकुरुवासो मयाऽनुभूयते। एकः खलु महान् दोषः, ममाहारः सुष्ठु न परिणमति, सुप्रच्छदनायां शय्यायां निद्रां न लभे। यथा वातशोणितमभित इव वर्तत इति पश्यामि। भोः! सुखं नामयपरिभूतमकल्यवर्तं च।

गद्यांशस्याऽस्य सप्रसङ्गं भावार्थः सुरगिरा लेख्यः।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—'स्वप्नवासवदत्त' नाटकस्य चतुर्थाङ्कादुद्धृते गद्यांशेऽस्मिन् कविः तृतीयेऽङ्के वत्सराजस्योदयनस्य पद्मावतीविवाहसम्बन्धान्तरनिष्पत्तिं सूचयित्वा परस्परं तयो रतिभावपरिपोषं वासवदत्ताविषयकं प्रणयमप्यनुस्यूतमुदयनस्य दर्शयिष्यंस्तदनुरूपां संवादभङ्गीं घटयितुं सपरिवारपद्मावत्युदयनप्रवेशं च सूचयितुमङ्कारम्भे विदूषकचेटीप्रयोक्ष्यमाणप्रवेशकमुखेन पूर्वं विदूषकस्य प्रवेशप्रदर्शनपुरःसरं निष्पन्ने च राज्ञो विवाहमङ्गले तत्सुहृदो विदूषकस्य हर्षमयं मानसोद्गारमाह—भो इति।

भावार्थः—विदूषकः कथयति—इदमस्माकं महत्सौभाग्यम् यत् मम सुहृदो वत्सराजस्योदयनस्याभिमतो विवाहोत्सवः समं पद्मावत्या संवृत्तः, स किल मङ्गलमयः समयोऽस्माकं पुरो विधिवशादिदानीमुपस्थितोऽभूत्। न कोऽप्येवं

चिन्तितवान् यत् अपहृतराज्येन वासवदत्तावियोगविकलेन राज्ञा तत्समसुख-दुःखैरस्माभिश्च साक्षात् परम्परया वा यन्नाम तादृशं महत्कष्टमनुभूतं दैवबलात्तस्मादुन्मुक्ता वयं भूयः पद्मावतीपरिग्रहैकहेतुकवर्णयिष्यमाणप्रासादवासादि-सम्भवाऽनिर्वचनीयसुखविशेषानुभूतिभाजनं भविष्यामः। सम्प्रति तु राजभवनेषूष्यते, अन्तःपुरवापीषु स्नानं विधीयते, प्रकृत्या मिष्टमृदुलानि मोदकखाद्यानि खाद्यन्ते। अहं किलास्मिन् समये प्रियसुहृद्वत्सराजीयनूतनविवाहमङ्गलमहिम्ना प्रासाद-वासान्तःपुरविहारमधुभोजनोपचितप्रभूतदिव्यसुखसौभाग्यशाली नूनमिमां भूमिं स्वर्गमेव मन्ये, किन्तु खिद्ये यदप्सरसामत्र साहचर्यं नास्ति। एतादृक्सुखविशेषानु-भवनेऽप्येकः खलु महान् विकारः समुत्पन्नः, यत् मम भोजनं सम्यक् न परिपाकं गच्छति, सुन्दरकोमलाऽऽस्तरणयुतशय्यायां निद्रां न लभे। अतोऽहं मन्येऽधुना वातरक्तव्याधिना समाक्रान्तोऽस्मि। रोगाक्रान्तं प्रातराशविरहितं च सुखं सुखं न वक्तुं शक्यते। सुखमपि व्याधिसम्बन्धेन समन्विताहार परिपाकाभावात्प्रातराश-योगविरहितं सत् सुखपदेन व्यवहार्यं नैव भवतीति भावः।

प्रश्नः—कुत्र नु खलु गता तत्रभवती पद्मावती, लतामण्डपं गता भवेत्, उताहो असनकुसुमसञ्चितं व्याघ्रचर्मावगुण्ठितमिव पर्वततिलकं नाम शिलापट्टकं गता भवेत्, अथवा अधिककटुकगन्धसप्तच्छदवनं प्रविष्टा भवेत्, अथवा आलिखितमृगपक्षिसङ्कुलं दारुपर्वतकं गता भवेत्। ही! ही! शरत्कालनिर्मलेऽन्तरिक्षे प्रसारितबलदेवबाहुदर्श-नीयां सारसपङ्क्तिं यावत् समाहितं गच्छन्तीं पश्यतु तावद् भवान्!

गद्यांशस्याऽस्य सप्रसङ्गं भावार्थः सुरगिरा प्रकाशनीयः।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—'स्वप्नवासवदत्त' नाटकस्य चतुर्थाङ्कादुद्धृते गद्यांशेऽस्मिन् प्रियतमादर्शनोत्कण्ठितं सुहृदं राजानमभिलक्ष्य पद्मावतीविषये विविधान् तर्कानुपक्षिपति विदूषकः कुत्र नु खलु इति।

भावार्थः—विदूषकः कथयति–क्व तावत् पूज्या पद्मावती प्रस्थिता भवेत्? कुञ्जं गता स्यात्? अथवा व्याघ्रचर्माणीव प्रतीयमानानि सर्जकपुष्पाणि यत्र भूयः

समन्तात् प्रसृतानि वर्तन्ते, तादृशं शैलशिखरस्थं पर्वततिलकनामकं शिलाशकलमुपवेष्टुं गता स्यात् ? किम्, पुष्पसुगन्धिसप्तपर्णपादपघ्राताऽऽवृत्तं स्थलविशेषमाश्रिता वा स्यात् ? चित्रलिखिता यत्र भूयांसः पशुपक्षिणो विलसन्ति, तं कृत्रिमकाष्ठमयपर्वतं प्रस्थिता भवेत् किं वा ? एतादृशो विकल्पानुद्भाव्य सुहृन्मनोविनोदाय विषयान्तरमाश्रयन् दत्तोर्ध्वदृष्टिः सन् वदति—अहो ! शरत्कालनिर्मलाकाशप्रदेशशालिनां पंक्तिबन्धेन सुन्दरं गच्छतां बलदेवबाहुसदृशानां सारसपक्षिणां यूथमिदानीं पश्यतु भवान् कथमेतन्मनोहरं दृश्यते । तदिदमक्ष्णोर्लक्ष्यतामानीय क्षणं मनोविनोदनीयम्, नेत्रे च सफलयितव्ये इति भावः ।

प्रश्नः—इदानीं शृणोतु भवान् । तत्र भवती वासवदत्ता मे बहुमता । तत्रभवती पद्मावती तरुणी, दर्शनीया, अकोपना, अनहङ्कारा, मधुरवाक्, सदाक्षिण्या । अयं चापरो महान् गुणः, स्निग्धेन भोजनेन मां प्रत्युद्गच्छति वासवदत्ता—कुत्र न खलु गत आर्यवसन्तक ! इति ।

गद्यांशस्याऽस्य भावार्थः सप्रसङ्गं देववाण्या निरूपणीयः ।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—'स्वप्नवासवदत्त' नाटकस्य चतुर्थाङ्कादुद्धृते गद्यांशेऽस्मिन् राज्ञा उदयनेन—'का भवतः प्रिया ? तदा वासवदत्ता, इदानीं पद्मावती वा ?' इति पृष्टे सति विदूषक उत्तरयति—इदानीमिति ।

भावार्थः—विदूषकः कथयति—मित्रवर ! मन्मुखादुत्तरं श्रोतुमुत्सुकेन श्रूयतां तदिदानीं मया निगद्यमानाम् । बहुमानदृष्ट्या पश्याम्यहं श्रीमतीं वासवदत्ताम् । अयि ! सखे ! माननीया श्रीमती पद्मावती यौवनं कामनीयकशान्तस्वभावमभिमानशून्यत्वं प्रियभाषितमौदार्यं चेत्यार्यगुणगणं वहन्ती नूनं प्रशंसनीया । सत्स्वप्येतेषु गुणेषु तत्र वासवदत्तायां गुणविशेषोऽयमन्योऽनन्यसामान्यः समुपलब्धो मया—यदसौ 'श्रीमान् वसन्तकः (विदूषकः) क्वास्तीति' मामितस्ततोऽन्विष्योपलभ्य सरसं भोजनं मत्पुरस्तादुपस्थापयन्ती मदीयं महीयां समादरं करोति स्मेति तस्यां वासवदत्तायां मे बहुमान उचित एवास्तीति भावः ।

## पञ्चमोऽङ्कः

प्रश्नः—'अहो ! अकरुणाः खल्वीश्वरा मे । विरहपर्युत्सुकस्यार्यपुत्रस्य विश्रामस्थानभूतेयमपि नाम पद्मावत्यस्वस्था जाता । यावत् प्रविशामि । (प्रविश्यावलोक्य) अहो ! परिजनस्य प्रमादः । अस्वस्थां पद्मावतीं केवलं दीपसहायां कृत्वा परित्यजति । इयं पद्मावत्यवसुप्ता । यावदुपविशामि । अथवान्यासनपरिग्रहेणाऽल्प इव स्नेहः प्रतिभाति । तदस्यां शय्यायामुपविशामि । (उपविश्य) किं नु खल्वेतया सहोपविशन्त्या अद्य प्रह्लादितमिव मे हृदयम् । दिष्टयाऽविच्छिन्नसुखनिःश्वासा । निवृत्तरोगया भवितव्यम् । अथवैकदेशसंविभागतया शयनीयस्य सूचयति मामालिङ्गेति । यावच्छयिष्ये ।'

गद्यांशस्याऽस्य सप्रसङ्गं भावार्थः प्रकाशनीयः ।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—'स्वप्नवासवदत्त' नाटकस्य पञ्चमाङ्कादुद्धृते गद्यांशेऽस्मिन् कविर्वर्णयति यत् समुद्रगृहे अन्तः प्रविशन्त्येव वासवदत्ता तत्र पद्मावत्याः शय्यायामेव शयितं प्रियतमं नायकं पद्मावतीबुद्ध्या पश्यन्ती तदीयमस्वास्थ्यं विचिन्त्य दूयमाना ब्रूते—अहो इति ।

भावार्थः—वासवदत्ता कथयति—'हन्त ! सर्वथा देवाः मम विषयेऽतीव निर्दयत्वमवलम्बन्ते, यदसौ पद्मावती, या मद्वियोगवशाद् गाढमुत्कण्ठाभावं बिभ्रतो मम प्रियतमस्याऽऽर्यपुत्रस्य सन्तापजातं प्रशमय्य मनो विनोदयति स्म, साऽपि साम्प्रतं शिरोवेदनया दुःखिता सती सुतरामस्वास्थ्यं भजते । मन्ये दुःसह्यं विरहवेदनामनुभवन्त्याः, विरहवेगपर्याकुलस्य पत्युर्मनोविनोदनौपयिकं कमप्युपायमिदानीमपश्यन्त्या मम दैवदुर्विपाकादप्रसन्नानामीश्वराणामकारुण्यस्यैव परिणामोऽयम् । अस्तु, तावदन्तः प्रविशामि ।' अन्तःप्रविश्य गृहे परितो वीक्षणं विधाय चिन्तापुरःसरं वासवदत्ता कथयति यत्—'अहो ! असावधानतेयं भृशं विस्मयकारी पद्मावत्याः परिचारिकावर्गस्य, योऽधुना वेदनावशादस्वस्थतामनुभवन्तीं पद्मावतीमत्रैकाकिनीं परित्यक्तवान् । रोगिणः सन्निधौ केनापि नूनमवस्थातव्यम्, अत्र तु कोऽपि नाऽस्तीत्यनुचितकारितेयं परिजनस्य । शेते किलैषा पद्मावती, इदानीमत्रो-

पविश्यते मया ।' इत्थं तद्दूरेऽन्यत्रोपवेशनं विचार्य पुनः किञ्चिच्चिन्तयन्ती वासवदत्ता ब्रूते—'अथवा अस्यामवस्थायां दूरेऽवस्थातुं नोचितं मे । स्थानान्तरोपवेशनेन स्नेहस्याल्पतेव दृश्यते । अतोऽत्रैव शयनीयेऽस्याः समीपमेवोपविश्यते मया ।' ततश्च पद्मावतीशयनीये उपविश्य विचिन्तयन्ती वासवदत्ता कथयति—'न जानामि केन कारणेनाऽत्र पद्मावत्या सहोपवेशनान्मनः प्रसीदतीव मे । अस्यास्तु निःश्वासपरम्परा देवादनवरुद्धाऽयत्नसञ्चारा दृश्यते । सम्भावयामि यत् स्वस्था लब्धारोग्या भवेदियमिति ।' ततश्च वासवदत्ता स्नेहानुरूपं सहशयनं नाम तत्कालोचितं कर्तव्यं मन्यमाना पक्षान्तरमुपस्थापयति यत् 'इयमत्र पद्मावती शयनस्यैकदेशे शयाना वर्तते । शयनैकदेशस्य च स्वाधिष्ठिततया स्वाऽनधिष्ठितं प्रदेशं प्रियजनशयनोचितं ध्वनयन्ती 'सविध इह शयित्वा साऽहमाश्लेषणीया' इति व्यक्तमाकूतमात्मनो निवेदयति । अतः कारणादेतदिच्छापूरणमात्मनः कर्तव्यं मत्वा सहैतया शयिष्यते मया ।

**प्रश्नः**—जयत्वार्यपुत्रः । अस्माकं महाराजो दर्शको भवन्तमाह—एष खलु भवतोऽमात्यो रुमण्वान् महता बलसमुदायेनोपयातः खल्वारुणिमभिघातयितुम् । तथा हस्त्यश्वरथपदातीनि मामकानि विजयाङ्गानि सन्नद्धानि । तदुत्तिष्ठतु भवान् ।

गद्यांशस्याऽस्य सप्रसङ्गं भावार्थो लेख्यः ।

**उत्तरम्**—सन्दर्भः प्रसङ्गनिर्देशश्च—'स्वप्नवासवदत्त' नाटकस्य पञ्चमाङ्कादुद्धृते गद्यांशेऽस्मिन् कविः सपत्नापहृतराज्यप्रत्याहरणलक्षणप्रधानकार्यसम्पादनोपयिकं महाराजदर्शकसूचनानुरूपं सपत्नारुणिकर्मकाक्रमणं नाम करणीयं कार्यं लब्धावसरमावेदयितुं नृपतेरुदयनस्य समीपे दर्शकभूपतिप्रेरितस्य वत्सराजमुदयनमुपजग्मुषो राजविजयाभिलाषिणः काञ्चुकीयस्य प्रवेशमुचितं दर्शयित्वा तन्मुखेन दर्शकस्य राज्ञः सन्देशमुपस्थापयति ।

**भावार्थः**—काञ्चुकीयः 'जयत्वार्यपुत्रः' इति कथनेन समुचितमाचारं प्रदर्श्य महाराजदर्शकसन्देशं वत्सराजमुदयनमुपस्थापयन् ब्रूते यत् 'अस्मन्महाराजदर्शकमहोदयाः श्रीमन्तं निवेदयन्ति, यत्खलु श्रीमदमात्यो रुमण्वान् परिपन्थितमारुणि

भवता प्रमाथयितुमिच्छता महान्तं सेनासमूहमात्मना सममादाय सम्प्रत्यत्रोपस्थितम्। हस्त्यश्वरथपादातं च मे सेनाङ्गचतुष्टयं जयैकसाधनं सर्वतः सज्जीभूतं श्रीमदागमनं प्रतीक्षते। अतः श्रीमताऽपि सोत्साहं विपक्षमारुणिमभियातुमुद्यतेन भूयताम्। निश्चिन्तोपवेशनस्य नायं समयः, उत्थानावसर एष श्रीमतः समुपस्थितोऽस्तीति भावः।

## षष्ठोऽङ्कः

**प्रश्नः**—भवति ! निवेद्यतां निवेद्यताम् वत्सराज्यलाभप्रवृद्धोदयायोदयनाय—एष खलु महासेनस्य सकाशाद् रैभ्यसगोत्रः काञ्चुकीयः प्राप्तः, तत्रभवत्या चाङ्गारवत्या प्रेषिताऽऽर्या वसुन्धरा नाम वासवदत्ताधात्री च, प्रतीहारमुपस्थिताविति।

गद्यांशस्याऽस्य सप्रसङ्गं भावार्थः प्रकाशनीयः। ( सन् १९६८ )

**उत्तरम्**—सन्दर्भः प्रसङ्गनिर्देशश्च—'स्वप्नवासवदत्त' नाटकस्य षष्ठाङ्कादुद्धृते गद्यांशेऽस्मिन् कविस्तावद् भूपतेरुदयनस्य पुनर्वत्सराज्यलाभं घोषवतीवीणोपलब्ध्या वासवदत्तास्मरणेन विमनायमानमानसमुदयनं भूपतिमुद्दिश्य, महाराजमहासेनसन्देशवचनं च काञ्चुकीयप्रतीहारीभ्यां मध्यमनीचपात्राभ्यां मिश्रविष्कम्भकेण सूचयितुं तदुचितमादौ काञ्चुकीयस्य प्रवेशं दर्शयित्वा महाराजमहासेननृपतेः सन्देशहरस्य काञ्चुकीयस्य मुखेन महाराजसन्देशसूचनं वर्णयति।

**भावार्थः**—महाराजमहासेननृपतेः सन्देशहरः काञ्चुकीयः स्वीयं निवेदनीयं महाराजसन्देशवचनं च निवेदयन्नाह यत् 'अयि ! श्रीमति ! सपत्नापहृतस्वीयराज्यप्राप्तिरूपराज्यमहोत्कर्षलक्ष्मीशालिने श्रीमते राज्ञ उदयनाय सत्वरमिदं निवेदनीयम् यत्—श्रीमन्महासेनमहीपतेराज्ञया समागतो रैभ्यनामा काञ्चुकीयोऽहं अङ्गारवत्या श्रीमत्या प्रद्योतनृपतेः पत्न्या प्रेरिता वसुन्धराख्या वासवदत्तायाः धात्री—उपमाता चेत्युभौ वत्सराजस्य विजयावसरे स्वामिनः कमपि सन्देशं श्रावयितुमुपस्थितौ द्वारि तिष्ठतः।

**प्रश्नः**—शृणोत्वार्यः। अद्य भर्तुः सूर्यामुखप्रासादगतेन केनापि वीणा वादिता। तां च श्रुत्वा भर्त्रा भणितम् घोषवत्याः शब्द इव

श्रूयत इति ।

गद्यांशस्याऽस्य सप्रसङ्गं भावार्थो विवेचनीयः ।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—'स्वप्नवासवदत्त' नाटकस्य षष्ठाङ्कादुद्धृते गद्यांशेऽस्मिन् कविर्वर्णयति यत् महासेनसन्देशहरेण काञ्चुकीयेन प्रोक्तं राज्ञे निवेदनीयं सन्देशमाकर्ण्य 'राज्ञो निवेदनार्थमयं द्वारपालोपस्थितियोग्यो देशः कालश्च नाऽस्ति' इत्युक्ते प्रतीहारिणि काञ्चुकीयः पृच्छति यत् 'अवसरोऽयमस्मत्सूतसन्देशप्रापणाऽननुकूलः कथम्' इति । ततः प्रतीहारी तदुत्तरं सोपपत्तिकं वक्तुमुपक्रमते ।

भावार्थः—प्रतिहारी कथयति यत् श्रोतव्यं श्रीमता । अद्य किल भर्तुर्वत्सराजस्य सूर्यामुखप्रासादे गतेन केनचित् क्रियमाणां कमपि वीणाध्वनिं श्रुत्वा, स्वप्रियायाः वासवदत्तायाः घोषवत्याख्यवीणायाः स्वरेण सुचिरं परिचितो राजा तत्स्वरश्रवणसमकालमेव 'केनेदं घोषवतीस्वरसदृशं श्राव्यते' इति सकौतुकं मानसमुक्तवानिति भावः ॥

प्रश्नः—ततस्तत्र गत्वा पृष्टः—कुतोऽस्या वीणाया आगम इति । तेन भणितम्—अस्माभिर्नर्मदातीरे कूर्चगुलमलग्ना दृष्टा । यदि प्रयोजनमनया, उपनीयतां भर्त्रे इति। तां चोपनीतामङ्के कृत्वा मोहं गतो भर्ता । ततो मोहप्रत्यागतेन वाष्पपर्याकुलेन मुखेन भर्त्रा भणितम्—दृष्टासि ! घोषवति ! सा खलु न दृश्यत इति । आर्य ! ईदृशोऽनवसरः । कथं निवेदयामि ?

गद्यांशस्याऽस्य सप्रसङ्गं भावार्थो लेख्यः ।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—'स्वप्नवासवदत्त' नाटकस्य षष्ठाङ्कादुद्धृते गद्यांशेऽस्मिन् कविर्वर्णयति यत् महासन्देशहरेण काञ्चुकीयेन प्रोक्तं राज्ञे निवेदनीयं सन्देशमाकर्ण्य 'राज्ञो निवेदनार्थमयं द्वारपालोपस्थितियोग्यो देशःकालश्च नास्ति' इत्युक्ते प्रतीहारिणि काञ्चुकीयः पृच्छति यद् 'अवसरोऽयमस्मत्सूतसन्देशप्रापणाऽननुकूलः कथम्' इति । ततः प्रतीहारिण उत्तरं श्रुत्वा तदनन्तरं किं संवत्सरमिति पृष्टे काञ्चुकीये [illegible] प्रतीहारी विजया नाम ॥

भावार्थः—प्रतीहारी कथयति यत्—ततो घोषवतीस्वरसदृशं स्वरं निशम्य वत्सराजस्तत्र स्थले वीणावादकस्योपकण्ठं गत्वा 'कस्मात् पुरुषात् कस्मात् स्थानाद्वा वीणामिमां लब्धवान् भवान् ! तत्प्राप्तिप्रकारः कथ्यतां भवते'ति राजा तं पृष्टवान् । ततो वीणोपलब्धिविषयकं राज्ञः प्रश्नमाकर्ण्य 'सहचरैः सह गतोऽहमासं नर्मदायास्तटम्, तत्र च दर्भस्तम्बेषु पतितेयं वीणा दृग्गोचरतामुपगताऽस्माकं करगताऽभवत् । आवश्यकताऽस्ति चेदेतस्याः श्रीमतस्तर्हि समर्पणीयैषाऽस्माभिः श्रीमते, श्रीमन्तमेवेयमधुनाऽलङ्कुरुतादि'त्येवं वीणावादकेनोत्तरं दत्तम् । ततः स वीणावादकस्तां वीणां राज्ञे समर्पितवान् । राजा च समर्पितां तां वीणां गृहीत्वा निजोत्सङ्गसङ्गिनीं विधाय वासवदत्तां स्मरन् मूर्च्छितोऽभवत् । किञ्चित् कालानन्तरं चेतनामधिगतो राजा रोदितुमारेभे । अश्रुपातमलिनाननश्च सः 'अयि ! घोषवति ! त्वदीयं दर्शनं जातम्, वासवदत्ता तु या त्वामङ्के कृतवती, दैवात् दृष्टिपथं न प्रयाती'त्येवं प्रत्यवोचत् । श्रीमन् ! इत्थं सति राज्ञोऽवस्थाविशेषे न तावत् साम्प्रतं समयो निवेदनस्य, राज्ञश्च वासवदत्ताध्यानमग्नतया न प्रयायात् किमपि निवेदितम् सर्वथा व्यर्थं च तदस्मिन्समये, न च तस्मै रोचेत नूनम् । अतः कथमिदानीं प्रापणीयं राज्ञः समीपं मया भवदीयं सन्देशभाषितम् ॥

प्रश्नः—'जयतु भर्ता। एष खलु महासेनस्य सकाशाद् रैभ्यसगोत्रः काञ्चुकीयो देव्याऽङ्गारवत्या प्रेषितार्या वसुन्धरा नाम वासवदत्ताधात्री च प्रतीहारमुपस्थितौ ।

गद्यांशस्याऽस्य सप्रसङ्गं भावार्थः प्रकाशनीयः ।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—'स्वप्नवासवदत्त' नाटकस्य षष्ठाङ्कादुद्धृते गद्यांशेऽस्मिन् कविर्वर्णयति यत् सूर्यामुखप्रासादादवतरन्तं राजानमुद्दिश्य गमनं प्रतीहार्या निर्दिष्टम् कविना । अत्र राज्ञः समीपवर्तिनि प्र[illegible] वस्थ विजयाशंसनपूर्वकं महासेनकाञ्चुकीयसन्देशं राजानं निवेदयन्ती प्रतीहारी कथयति यत्—जेदु ( जयतु ) इत्यादि ॥

भावार्थः—प्रतीहारी कथयति यत्—विजयतां भवान् । श्रीमान् महासेनभूपती रैभ्यसगोत्रं काञ्चुकीयं, श्रीमती प्रद्योतराज (महासेन) पत्नी अङ्गारवती

च वसुन्धरा नाम्नीं वासवदत्ताया धात्रीं ( उपमातरं ) श्रीमतोऽन्तिकं किमपि सन्दिश्य प्रेषयताम्, तौ द्वारदेशमुपस्थितौ स्तः ॥

**प्रश्न:—'पद्मावति ! किं श्रुतम्—महासेनस्य सकाशाद् रैभ्यसगोत्रः काञ्चुकीयः प्राप्तः, तत्रभवत्या चाङ्गारवत्या प्रेषितार्या वसुन्धरा नाम वासवदत्ताधात्री च, प्रतीहारमुपस्थिताविति ।**

**गद्यांशस्याऽस्य सप्रसङ्गं भावार्थो विवेचनीयः ।**

**उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च**—'स्वप्नवासवदत्त' नाटकस्य षष्ठाङ्कादुद्धृते गद्यांशेऽस्मिन् कविर्वर्णयति यत् सूर्यामुखप्रासादादवतरन्तं वत्सराजमुदयनमुद्दिश्य, गमनं प्रतीहार्या निर्दिष्टं कविना । ततः राज्ञः समीपवर्तिनि प्रदेशे प्रविश्य प्रतीहारिणा विजयाशंसनपूर्वकं महासेनकाञ्चुकीयसन्देशो निवेदितः । ततो राजा पद्मावती आहूता । ततो दूतोपस्थितिवार्तामुद्दिश्य राजा पद्मावतीं पृच्छति—पद्मावतीति ॥

**भावार्थः**—राजा पद्मावतीं पृच्छति यत्—'अयि ! पद्मावति ! श्रीमन्महासेनाङ्गारवतीप्रहिताभ्यां काञ्चुकीयवसुन्धराभ्यां द्वारदेशोऽलङ्क्रियते सम्प्रती'ति श्रवणपदवीं तव प्रयातं किमु ! किन्तु जानासि वार्तामिमाम् ?'

**प्रश्न:—'अनुरूपमेतद् भवत्याऽभिहितम्—वासवदत्ताजनो मे स्वजन इति । पद्मावति ! आस्यताम् । किमिदानीं नास्यते ?'**

**गद्यांशस्याऽस्य सप्रसङ्गं भावार्थो लेख्यः ।**

**उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च**—'स्वप्नवासवदत्त' नाटकस्य षष्ठाङ्कादुद्धृते गद्यांशेऽस्मिन् कविर्वर्णयति यत् वत्सराजमुखेन महासेनकाञ्चुकीयवासवदत्ताधात्र्योरागमनवृत्तान्तमवगत्य 'आर्यपुत्र ! प्रियं मे स्वसम्बन्धिबन्धुजनस्य कुशलवृत्तान्तं श्रोतुम्' इति पद्मावत्युक्तं प्रशंसन् राजा कथयति—अनुरूपमिति ।

**भावार्थः**—राजा ब्रवीति यत्—'आर्ये प्रिये ! वासवदत्ताबन्धुजनं स्वजनं निर्दिशन्ती नूनं कुलशीलादिसदृशमेवं साम्प्रतमुक्तवती भवती ! सर्वथा प्रशंसनीयमिदं वचनं भवत्या हृदये पूर्णतया सापत्न्यद्वेषाभावं द्योतयति ।' समयोचितं

किञ्चिद्विचार्य तत्र तिष्ठन्तीं पद्मावतीं पश्यन् 'ममाज्ञामन्तरेण नैषोपवेक्ष्यती'ति तां स्वसमीपमुपवेशयितुमिच्छन् राजा कथयति यत्—'श्रीमति पद्मावति ! किमेवं स्थीयते ? समयेऽस्मिन् किमर्थं नोपविश्यते ? नात्र किञ्चिद् विचारणीयम्, निशङ्कमत्र त्वयोपवेष्टव्यम्' ॥

**प्रश्नः—'कलत्रदर्शनार्हं जनं कलत्रदर्शनात् परिहरतीति बहुदोष-मुत्पादयति । तस्मादास्यताम् ।**

**गद्यांशस्याऽस्य सप्रसङ्गं भावार्थः प्रकाशनीयः । ( सन् १९७० )**

**उत्तरम्–सन्दर्भः प्रसङ्गनिर्देशश्च**—'स्वप्नवासवदत्त' नाटकस्य षष्ठाङ्कादुद्धृते गद्यांशेऽस्मिन् कविर्वर्णयति यत् प्रतीहारिमुखेन महासेनकाञ्चुकीयवासवदत्ताधात्र्योरागमनवृत्तान्तमवगत्य राजा पद्मावतीमाह्वातुमादिशति । ततः सहोपवेशनायाऽऽदिष्टे सति राजा सहोपवेशनं निषेधन्तीं पद्मावतीं तत्कारणं पृच्छति । तदा पद्मावत्या 'आर्यपुत्रस्याऽपरः परिग्रह इति कदाचिद्वासवदत्तास्वजनाय न रोचते' इत्युक्ते तत्कालोचितं सहोपवेशनं समर्थयन् वत्सराजः पद्मावत्याः शङ्कितं निराकुरुते—कलत्रेत्यादि ।

**भावार्थः**—पद्मावतीशङ्कां निराकुर्वन् राजा कथयति यत्—'प्रिये ! भवत्या न विचारितं सम्यक् । अत्रागत्य भवतीमपश्यन्नेष बन्धुजनो' यस्मै सम्बन्धिजनाय भार्या दर्शनीया, तस्मै तां वत्सराजो न दर्शयति । नूनमयं सम्बन्धिजनाद्विमुक्तः, 'भार्या वाऽस्य कुरूपा स्यात्' इत्येवमन्यादृशांश्च बहून् दोषानारोपयेदावयोः । द्वितीयपत्नीदर्शनं न रोचेताऽस्मै इत्येष भवत्या सम्भावितो दोषस्त्वकिञ्चित्करः । प्रथमभार्याया अभावे च मया स्वीकृतां द्वितीयां भार्यां भवतीं पश्यन्नयं जनस्तात्कालिकीं स्थितिमवधारयन् गुणग्राही कदाचित् प्रमोदेताऽपि । अतोऽत्रैव समीपे त्वयोपवेष्टव्यम् । एतदेवोचितमस्मिन् समये' इति ।

**प्रश्नः—आह भट्टिनी—उपरता वासवदत्ता । मम वा महासेनस्य वा यादृशौ गोपालकपालकौ तादृश एव त्वं प्रथममेवाभिप्रेतो जामातेति । एतन्निमित्तमुज्जयिनीमानीतः । अनग्निसाक्षिकं वीणाव्यपदेशेन**

दत्ता । आत्मनश्चपलतयाऽनिर्वृत्तविवाहमङ्गल एव गतः । अथ चाऽऽवाभ्यां तव च वासवदत्तायाश्च प्रतिकृतिं चित्रफलकायामालिख्य विवाहो निर्वृत्तः। एषा चित्रफलका तव सकाशं प्रेषिता। एतां दृष्ट्वा निर्वृतो भव।

गद्यांशस्याऽस्य सप्रसङ्गं भावार्थो विवेचनीयः।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—'स्वप्नवासवदत्त' नाटकस्य षष्ठाङ्कादुद्धृते गद्यांशेऽस्मिन् कविर्वर्णयति यत् समुपस्थितं राज्ञः प्रियतमाऽतीतविषयानुचिन्तनप्रसङ्गमाक्षिप्य वसुन्धरा नाम्नी वासवदत्ताधात्री श्रीमन्महाराज्ञ्या अङ्गारवत्याः सन्देशवाचोऽवशेषमुपक्षिपन्ती ब्रूते—आहेति ।

भावार्थः—धात्री उवाच—अस्मदीयस्वामिनी सन्दिष्टवती यत्—'देववशादिदानीं कालेन कवलितायाः वासवदत्ताया दर्शनं दुर्लभम् । वत्सयोर्गोपालकपालकयोर्विषये श्रीमतो महाराजस्य मम च यथा वात्सल्यं वर्तते तथा त्वय्यपि । युष्मासु न कश्चिदावयोर्भेदभावः । उज्जयिन्यां त्वदागमनात्पूर्वमेव त्वद्गुणलुब्धाभ्यामावाभ्यां मनसा त्वं जामाता कल्पितः, तदेव च मानसोद्दिष्टं पूरयितुं त्वदीयजामातृभावसम्बन्धसङ्घटनाभिप्रायेण पुरा त्वमुज्जयिन्यामुपस्थापितः । अकृत्वाऽग्निसाक्षिणं तत्र वीणावादनकलाकौशलशिक्षणच्छलेन तुभ्यं दत्ता स्वकन्या वासवदत्ता । गान्धर्वविवाहविधिना च स्वीकृत्य तां तत्प्रीतिपाशपरवशेन त्वया चेतसश्चाञ्चल्येन विवाहमङ्गलविधानमस्मत्सम्पादयिष्यमाणमनपेक्ष्यैव तया सह गूढं स्वां नगरीमागतम् । आवां च तदेतदालोच्य त्वया सह वासवदत्तायाः परिणयं कर्तुमिच्छन्तौ तदिच्छापूर्तेरुपायमनुरूपं कमप्यपश्यन्तौ चिरकालादभिलषितं विवाहमङ्गलं युवयोरालेख्यकल्पितयोः कृत्रिमं च सम्पाद्य कथञ्चित् सन्तोषं लब्धवन्तौ । मनस्तु नौ साक्षात् सत्यं सम्बन्धं युवयोर्मिथः सम्पादयितुमिच्छति । अस्तु—तावत्, गतं न शोच्यम् । 'विधेः सङ्केत एतादृगेव स्यात्कदाचि'दिति मत्वा तूष्णीमास्यते । चित्रफलकं च तदिदं युवयोराकृतिभ्यां संवदन्त्यौ प्रतिच्छाये बिभ्रत् प्रहितं त्वत्समीपम् । वासवदत्ताविरहानलज्वालाजालाकुलेन त्वया खलु चित्रदर्शनेनैव कथञ्चिच्छान्तिं नेयोऽन्तरात्मा । अयमेव तावदिदानीमस्मदुपायस्तव [illegible] इति ।

**प्रश्नः—निर्यातय पद्मावति ! साक्षिमन्न्यासो निर्यातयितव्यः । इहाऽत्रभवान् रैभ्यः अत्रभवती चाधिकरणं भविष्यतः ।**

**गद्यांशस्याऽस्य सप्रसङ्गं भावार्थो लेख्यः ।	( सन् १९६४ )**

**उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च**—'स्वप्नवासवदत्त' नाटकस्य षष्ठाङ्कादुद्धृते गद्यांशेऽस्मिन् कविर्वर्णयति यत् न्यासभूतामावन्तिकां दृष्ट्वा 'ब्राह्मणस्य भगिनीत्वेन नेयं वासवदत्ते'ति चेतसा निश्चितवांश्चित्रसादृश्यपरीक्षणविषयाद्विमुखीभवन्नरपतिरुदयनः समागताय तस्मै तन्न्यासप्रत्यर्पणं कारयितुकामस्तदर्थं पद्मावतीं कथयति—निर्यातयेत्यादि ।

**भावार्थः**—राजा पद्मावतीं कथयति यत्—'अयि पद्मावति ! न्यासोऽयं प्रत्यर्पणीय एतस्मै, न्यासप्रत्यर्पणं च सम्भाव्यमानाऽनभ्युपगमप्रसङ्गभिया कञ्चित् साक्षिणं पुरस्कृत्यैव कर्तव्यम् । अत एतस्मिन् विषये श्रीमान् रैभ्यः श्रीमती धात्री चेत्युभौ निर्णयस्थानतां नेतव्यौ । एतावेव साक्षिणौ कृत्वा न्यासप्रत्यर्पणमिदं कर्तव्यम्' इति ।

# १. भारतीया संस्कृतिः

## ( सन् १९७७ ई० )

'सम्' इत्युपसर्गपूर्वात् 'कृञ्' धातोःक्तिन् प्रत्यये कृते निष्पन्नः 'संस्कृति' शब्दो धार्मिकप्रवृत्ति सत्साहित्यं समुन्नतादर्शं विज्ञानादिकं च बोधयति। सम्प्रति तु आङ्ग्लभाषायाः 'कल्चर' शब्दस्य प्रभावेण तदर्थं एव प्रयुज्यतेऽसौ शब्दः।

सर्वासु संस्कृतिषु प्राचीना श्रेष्ठा च भारतीया संस्कृतिरिति नास्ति मनागपि संशीति लेशः। यस्मिन् काले सभ्यानां देशानां जनाः सभ्यताहीनाः संस्कृतिविहीना दीनाः स्वजीवनयापनं कुर्वन्त आसन्, तस्मिन्नपि काले भारतीया संस्कृतिः स्वचरमोत्कर्षे विराजन्ती, सदाचारान् निर्दिशन्ती, सर्वलोकहितं वन्दती, धर्ममुपदिशन्ती, सन्मार्गं च कथयन्ती च शोभते स्म। तथा चोक्तं भगवता मनुना—

'एतद्देशप्रसूतस्य सकाशादग्रजन्मनः ।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः ॥'

'पुरातनीयं संस्कृतिः' इति कृत्वेव नास्या गरिमा, किन्तु गुणगणैरेव वर्तते अस्या महिमा; तैरेव च जायते अन्यसंस्कृतिषु स्वतो लघिमा। विचारस्वातन्त्र्यम्, धर्मप्राधान्यम्, आत्मज्ञानम्, सदाचारः, समन्वयः इत्यादयो दुर्लभा विविधाः गुणा अत्रैकीभूता दृश्यन्ते। प्राचीनकाले असावेव संस्कृतिः सर्वस्मिन् जगति स्वप्रभावं प्रदर्शितवती। यस्याऽवशेषोऽद्यापि चीन-जापान-कम्बोडिया प्रभृतिषु देशेषु सुस्पष्टमवलोक्यते।

भारतीयसंस्कृतेः सर्वप्रथमोऽयं गुणो वर्तते, यदियं भगवती भागीरथी इव स्वमध्यपतितान् स्वेतरसंस्कृतिनदीनदादीन् स्वात्मरूपेण परिणमन्ती स्वात्मसात् कुर्वन्ती निर्बाधं प्रवहति। परन्तु सम्प्रति सर्वत्र प्रचारमवहन्ती भौतिकसुखस्येव प्राधान्यमुपदिशन्ती पूर्वस्मिन् पाश्चात्यरूपं दर्शयन्ती पाश्चात्यसंस्कृतिः भारते भासते, तया च भारतीयसंस्कृतिर्विरलप्रचारेव दृश्यते। विषयेऽस्मिन् भारतीयविचारकाणां मतमिदं यद् यतो हि पूर्वदास्यप्रभावादेव प्रचारबाहुल्यं सम्प्रति

जातमस्याः, किन्तु भौतिकसुखस्य पराकाष्ठामनुभवत्सु ब्रिटेनाऽमेरिकादिधनाढ्येषु देशेषु समुद्विग्ना जना भारतीयसंस्कृतेरेव शरणे समायान्तो दृश्यन्ते ।

वर्णाश्रमव्यवस्था भारतीयसंस्कृतेर्मूलभूतं तत्त्वम् । अनया व्यवस्थया 'वेरोजगारी' पदवाच्यायाः समस्यायाः समाधानं स्वत एव संजायते । यतो हि वर्तमानकाले शारीरिकश्रमं विहाय ग्रामं परित्यज्य पत्तनेषु धावन्तः शतशश्छात्रा अधीत्य च स्वपरम्पराप्राप्तं कार्यं न कुर्वन्ति, किन्तु व्यवस्थयाऽनया नैतादृशी देशव्यापिनी दशा भवितुमर्हति । यतः संस्कृतिरियं स्वीयेषु सर्वेष्वेव कार्येषु गौरवं दिशति, न वा शारीरिकश्रमस्य गौरवं गूहते । एवमेवाऽऽश्रमव्यवस्थया स्वत एव जनो वैराग्यमावहन् धर्मगौरवं धारयन् पापाचाराद् विरमन् सर्वहितावहं कार्यं कुर्वन् स्वशरीरावस्थया सह स्वकार्यकलापस्य सामञ्जस्यं विदधाति । अत एव पारिवारिकसमस्यानां समाधानं स्वत एव जायते ।

वस्तुतो यदि वयं विचारयामस्तर्हि सर्वेषामेषां वर्धमानानां पापानामपराधानाम्, अनैतिकाचरणानां कुकार्याणाञ्च जननी भोगतृष्णैव वर्तते । अनयैव प्रेरितो जनः पैशाचिककार्याण्यपि करोति, किन्तु तृष्णेयं प्रतिक्षणं वर्धत एव । भारतीया संस्कृतिश्चाऽस्या दुष्पूरतां शासयन्ती परित्याज्यामेनां समुपदिशति । अनेकेषां महाराजानां सम्राजाञ्च वार्धक्ये वननिवास इदमेव तत्त्वं प्राधान्येन प्रकटयति ।

अतः सिद्ध्यतीदं यद् अभ्युदयनिःश्रेयससिद्धिप्रदाया उभयलोकसाधिकायाः सर्वजनहितसाधिकायाः भारतीयसंस्कृतेः समक्षं केवलमअर्थमात्रप्रधाना भौतिकसुखैकप्राणा मिथ्यागर्वैकताना परस्परविरोधप्रधाना नवीना पाश्चात्यसंस्कृतिर्हिंसानिरता साम्यवादसंस्कृतिर्वा विचारविहितसम्माना भवितुं नार्हति ।

'सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः ।
सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग् भवेत् ॥'

इत्यादीन्यनेकविधानि सर्वलोकहितानि रत्नानि वहन्ती भारतीयसंस्कृतिरेव सम्प्रति सांसारिकसुखमृगतृष्णिकायां भ्रान्तस्य लोकस्य शान्तये भविष्यतीति ।



—:o:—

## २. संस्कृतभाषायाः महत्त्वम्

( सन् १९६८, ६९, ७०, ८३ ई० )

इह खलु नानाविधसुखदुःखज्वालामालासमाकुले विचित्रेऽस्मिन् जगतीतले वर्तन्तेऽनेके प्राणिनः, तत्र प्रामुख्यम्भजमानो मनुष्यः धर्मेणैव विशिष्टतां भजत इति न तिरोहितं विदुषाम्। तत्र का आवश्यकता भाषाया इति तु नाविदिततराम्। तदत्र विचार्यंते संस्कृतभाषाविषये किञ्चित्।

प्राचीनकाले समेषामपि मनुष्याणां लोकव्यवहारभाषा संस्कृभाषैवाऽऽसीदिति प्राचीनेतिह्यसाक्ष्यादवगम्यते। संस्कृतभाषा द्विविधा वैदिकी लौकिकी चेति। वैदिकी भाषा सर्वासु भाषासु प्राचीनतमा, समेषां विश्वभाषाणाञ्च जननी वर्तते। लौकिकी संस्कृतभाषाऽपि द्विविधा—सामान्यलोकानां 'मानुषी', द्विजानाञ्च 'संस्कृता' चेति भेदात्। इयं भाषा 'गीर्वाणी', 'देवभाषा', 'अमरभाषा' चेत्युच्यते। तथा चोक्तम्—

'संस्कृतं नाम दैवी वागन्वाख्याता महर्षिभिः।'

समग्रमपि प्राचीनं साहित्यम् संस्कृतभाषायामेवोपलभ्यते। चत्वारो वेदाः उपवेदाः, ब्राह्मणग्रन्था, उपनिषदश्च संस्कृतभाषायामेव सन्ति। वेदेषु मनुष्याणां कर्तव्याकर्तव्ययोर्निर्धारणमस्ति। ततो वेदानां व्याख्यानभूता उपवेदाः ब्राह्मण-ग्रन्थाश्च, ततश्च सन्त्येकादशोपनिषदः। ततोऽस्माकं गौरवभूतानि षड्दर्शनानि सन्ति। आयुर्वेदादिशास्त्राणां ग्रन्था अपि संस्कृतभाषायामेवोपनिबद्धास्सन्ति।

संस्कृतभाषायां लिखितानां काव्यानां नाटकानाञ्चाध्ययनेन हृदयं प्रमोदते। संस्कृतभाषायाः काव्यानां माधुर्यन्तु प्रसिद्धमेव। सर्वोत्कृष्टसाहित्यसंयुक्तेयं संस्कृत-भाषा। भगवतः श्रीरामचन्द्रस्य चरित्रव्याख्यानभूतं रामायणम् वाल्मीकिनाऽस्या-मेव भाषायां प्रणीतम्। व्यासोऽपि संस्कृतभाषायामेव विश्वविख्यातं महाभारत ग्रन्थं प्रणिनाय। अष्टादश पुराणानि, व्यासः संस्कृतभाषायामेव निर्ममे। कालिदास-भारवि–माघ–श्रीहर्षादयो महाकवयः सुन्दराणि काव्यानि नाटकानि च संस्कृत-भाषायामेवाऽलिखन्। धन्येयं सुरभारती। वस्तुतस्तु भारतस्य प्रतिष्ठा संस्कृतेनैव भवितुमर्हति। उक्तञ्च—

'भारतस्य प्रतिष्ठे द्वे संस्कृतम् संस्कृतिस्तथेति।'

संस्कृतभाषा धर्मार्थकाममोक्षरूपचतुर्विधपुरुषार्थसिद्धये मुख्यं साधनं वर्तते।

आङ्ग्लादिभाषापेक्षया संस्कृतभाषाऽतीव सरला, कोमला, मधुरा च भाषा वर्तते, अतः सा गीतादिमुखेन स्वयमेव पाठकानाह्लादयति।

भारतीया संस्कृतिः संस्कृतभाषायामेव दृश्यते। सत्स्वपि विभिन्नभाषाभाषिषु जनेषु, देशेऽस्मिन् सर्वेऽपि धार्मिकाः संस्काराः संस्कृतभाषायामेव विधीयन्ते। संस्कृतभाषा सम्पूर्णमपि राष्ट्रमैक्यसूत्रे निबध्नाति।

संस्कृतभाषा जनेषु विश्वबन्धुत्वभावनामुद्बोधयति। उक्तञ्च—

अयं निजः परो वेति गणना लघुचेतसाम्।
उदारचरितानान्तु वसुधैव कुटुम्बकम्॥'

वेदेष्वपि विश्वबन्धुत्वबोधका अनेके मन्त्रास्समाम्नाताः। विदेशेष्वपि संस्कृत-भाषाया अतीव महत्त्वं दरीदृश्यते। मैक्समूलर–मैकडानल–कीथ–ग्रिफिथप्रभृतयो वैदेशिकाः विद्वांसः संस्कृतभाषयाऽत्यन्तं प्रभाविता अभवन्। स्वधर्मस्य ज्ञानाय संस्कृताध्ययनमावश्यकं वर्तते। संस्कृतभाषैव भारतवर्षस्याऽस्ति प्राणभूता भाषा।

जीवने शान्तेर्महती आवश्यकता वर्तते। सा च संस्कृतमन्तरेण न कथमपि सम्भवति। छात्रेष्वद्यानुशासनहीनतायाः लक्षणानि प्राचुर्येणाऽवलोक्यन्ते। तत्र संस्कृतशिक्षाया अभाव एव कारणम्। संस्कृतभाषायामनुशासनस्य शिक्षा दृश्यते। तत्र माता, पिता, आचार्यः अतिथिश्चैते देवतुल्याः स्वीक्रियन्ते। तथाहि—

'मातृदेवो भव पितृदेवो भव आचार्यदेवो भव अतिथिदेवो भव।'
'मातृमान्, पितृमान्, आचार्यवान्, पुरुषोवेद।'
'अनुव्रतः पितुः पुत्रो मात्रा भवतु सम्मनाः।'

राष्ट्रे नागरिकेषु कथमनुशासनं भवेदित्यपि ज्ञायते संस्कृतेन। तथा चोक्तम्—

'शस्त्रेण रक्षिते राष्ट्रे शास्त्रचिन्ता प्रवर्तते।'

एवं संस्कृतभाषा सर्वगुणसम्पन्ना। इयं राष्ट्रभाषा भवेच्चेत् तर्हि दक्षिणोत्तर-भारतयोर्भाषाविवादोऽपि शान्तो भवेत्। संस्कृतज्ञा विद्वांसस्तु प्राणिमात्रे समत्वबुद्धिं कुर्वन्ति न ते तेषु किमपि भेदं मन्यन्ते। उक्तञ्च—

'विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि।
शुनि चैव श्वपाके च पण्डिताः समदर्शिनः॥'

अतः सर्वैरपि संस्कृतभाषाया अध्ययनमवश्यमेव कर्तव्यमिति दिक्।

—:o:—

## ३. भारते संस्कृतस्य स्थानम्

### ( सन् १९७९ ई० )

संसारेऽस्मिन् पुरा सर्वप्रथमं परमेश्वरेण चतुर्णामस्मद्देशीयऋषिकल्पानामग्निवायुरादित्याङ्गिरसां हृदयेषु मानवसंस्कृतेर्मूलभूता महानिधयो वेदाः संस्कृतभाषायामेव प्रकाशिता इत्यस्मत्कृते महद्गौरवाधायकं विराजते। एतादृशी गौरवान्विता संस्कृतभाषा द्विविधा-वैदिकलौकिक भेदात्। उपनिषद्ब्राह्मणग्रन्थादयो वैदिकसंस्कृतभाषायामस्मिन्नेव देशे प्रणीताः। सर्वप्रथमं महर्षिणा वाल्मीकिनाऽऽदिकविना रामायणाख्यं काव्यं लौकिकसंस्कृतभाषायां निबद्धम्। अस्मिन्नेव भारते वर्षे श्रीकृष्णद्वैपायनव्यासेनेतिवृत्तबोधकं महाभारताख्यं पुस्तकं संस्कृतभाषायामेव निबद्धमित्यादिभिर्हेतुभिर्भारतवासिनां कृते संस्कृतभाषायाः सर्वाधिकं महत्त्वं वर्तत इति सुस्पष्टं सिध्यति। अत एवोक्तम्—

'भारतस्य प्रतिष्ठे द्वे संस्कृतं संस्कृतिस्तथा।'

अस्माकं देशे भारतीयराजशास्त्र-धर्मशास्त्र-मोक्षशास्त्र-कामशास्त्राऽर्थशास्त्र-प्रभृतीनि सर्वाण्यपि शास्त्राणि संस्कृतभाषायामेव प्रणीतानि। संस्कृतं विहाय भारतीयो भारतस्यापि परिभाषां कर्तुं न शक्नोति।

प्राचीनकाले संस्कृतमेव बृहत्तमस्य भारतवर्षस्य राज्यभाषा आसीत्। नैतादृशः कोऽपि शब्दो वर्तते, यस्याऽनुवादः संस्कृतभाषायां न स्यात्। सम्प्रति विरलप्रसारे जातेऽपि न कोऽपि तादृशो भारतीय आस्ते, यः संस्कृतं न जानाति। न्यूनातिन्यूनं द्वित्रान् श्लोकान् जानात्येव विदेशीयभाषाकोविदोऽपि भारतीयः। सत्स्वप्नेकेषु प्रदेशेषु, सतीष्वपि विभिन्नासु भाषास्वस्माकं देशे सर्वा एव धार्मिकाः क्रियाः संस्कृतभाषायामेव विधीयन्ते। संस्कृतमेव सम्पूर्णेऽपि राष्ट्रे राष्ट्रियैक्यभावनां प्रसारयति। अत एव निःसङ्कोचमुद्घोषयितुं शक्यतेऽस्माभिर्यत्, संस्कृतं तत् तत्त्वं वर्तते, येन विना भारतीयो भारतीय एव भवितुं नार्हति।

न केवलं भारतीयानामेव हितार्थं प्राच्यज्ञानार्थं वा संस्कृतमपेक्षितम्, परन्तु सर्वेषामेव भाषाविदाञ्च कृते वर्तते संस्कृतस्यातिशयं महत्त्वम्। यतो हि यस्मिन् काले आधुनिकसभ्यसत्तमानां विदेशवासिनां पूर्वजाः सभ्यताशब्दविरहिता आरण्यकजीवनपरा इतस्ततो भ्रमन्ति स्म, तस्मिन्नपि काले भारतीया दार्शनिकाः,

साहित्यिकाः, अनेके कोविदाश्च गूढातिगूढतत्त्वानां विवेचनं कुर्वन्तः सत्साहित्यं सृजन्ति स्म। सदाचारं समुपदिशन्तः स्वीयाचरणेन भुवं पावयन्ते स्म। तेषां समेषां विदुषां भाषा संस्कृतमेवाऽऽसीत्। अतो यदि वर्तते तत्कालीनस्य साहित्यस्य पठनमननादेरावश्यकता तर्हि संस्कृतमेवाऽध्येतव्यम्। अत एव च विद्यारसिकैः श्रीमैक्समूलरप्रभृतिभिर्वैदेशिकैर्देशकालपरिधिं परित्यज्य यावज्जीवं सुरभारतीसेवनं विधाय विश्वव्यापि यशोऽवाप्तम्। एवम् भारते संस्कृतस्य प्रतिष्ठा, संस्कृतभाषायाः गौरवञ्च स्पष्टमेव।

—:०:—

## ४. भासनाटकचक्रम्
### ( सन् १९७७ ई० )

सूरिधन्येन नाटककारमूर्धन्येन कविताकामिनीहासेन महाकविभासेन कति नाटकानि प्रणीतान्यासन्निति विषये वर्तते विवादो बुधेषु। तत्र श्री टी० गणपति-शास्त्रिवर्यैरन्वेषितम् यद् भासनाटकचक्रस्य प्रणेता भास एव, यत्र त्रयोदश नाटकानि सन्ति। एतैः सन् १९१२ ईशवीये अनन्तशयनग्रन्थमालात्रिवेन्द्रमिति संस्थातो भासस्य स्वप्नवासवदत्तादित्रयोदशनाटकानां प्रामाणिकं प्रकाशनं विहितम्, यद् 'भासनाटकचक्रम्' इति नाम्ना ख्यातं वर्तते।

अतः परं भासनाटकचक्रस्य त्रयोदशनाटकानां संक्षिप्तपरिचयोऽत्र समुपस्थाप्यते—

(१) प्रतिज्ञायौगन्धरायणम्—नाटकेऽस्मिन् चत्वारोऽङ्कास्सन्ति। 'स्वप्नवासवदत्तस्य' पूर्वकथा तत्र निबद्धाऽस्ति। नाटकेऽस्मिन् मन्त्रिणो यौगन्धरायणस्य प्रयत्नेन वत्सराजस्योदयनस्य अवन्तिकुमार्या वासवदत्तया सह गुप्तपरिणयस्य, मन्त्रिणो दृढप्रतिज्ञायाः, बुद्धिकौशलस्य च रोमहर्षकं वर्णनमस्ति।

(२) स्वप्नवासवदत्तम्—नाटकेऽस्मिन् षडङ्कास्सन्ति। राज्ञ उदयनस्य वासवदत्तया सह स्वप्ने मेलो जायते, अत एवाऽस्य नाटकस्य 'स्वप्नवासवदत्तम्' इति नाम संवृत्तम्। उज्जयिनीनरेशस्य प्रद्योतस्य राजप्रासादात् वासवदत्ताहरणानन्तरं राजा उदयनः कामक्रीडायां निमग्नो भवति, राज्यकार्यञ्च बाध्यते।

अतस्तत्शत्रुरारुणिराक्रन्तुमवसरो लभते। परन्तु मन्त्री यौगन्धरायणो दत्तावधानस्तिष्ठति। स आरुणिं पराजेतुं मगधराजस्य दर्शकस्य साहाय्यं वाञ्छति। सः पद्मावत्या मगधराजभगिन्या सहोदयनस्य विवाहं कारयित्वा राजशक्तिं वर्द्धयितुमैच्छत्। ध्रियमाणायां च वासवदत्तायां न सम्भवतीदमिति वासवदत्तासम्मत्या कदाचिदुदयने मृगयार्थं गते, लावाणके 'अग्नौ वासवदत्ता दग्धे'ति प्रचार्यते यौगन्धरायणेन, वासवदत्तां च नीत्वा सः मगधराजदर्शकस्य पुत्र्याः पद्मावत्या अन्तिके न्यासरूपेण परित्यक्तवान्। तत उदयनस्य पद्मावत्या सह विवाहो भवति। एकस्मिन् दिने उदयनः स्वप्ने वासवदत्तां पश्यति, तस्य च मनसि वासवदत्तायाः पुनः स्मरणं जायते। यथासमयं वासवदत्ता प्रकटीभवति, उदयनस्य तया सह मेलो भवति। उदयनस्य सेनापतिः रुमण्वान् आरुणिं रणे पराजितं करोति। एवमस्य नाटकस्य सुखमयमन्तं जायते।

(३) उरुभङ्गम्—एकाङ्किनाटकेऽस्मिन् भीमस्य प्रतिज्ञानिर्वाहदार्ढ्यस्य रौद्रं वीररसपूर्णं च वर्णनमस्ति। भीमदुर्योधनयोर्गदायुद्ध एव दुर्योधनस्य कारुणिकस्य मृत्योर्वर्णनमस्ति। संस्कृतवाङ्मयस्य नाट्यपरम्परायामिदमेवैकमात्रं दुःखान्तं नाटकमस्ति।

(४) दूतवाक्यम्—इत्यभिधेये नाटके दूतभूतस्य भगवतः श्रीकृष्णस्य सदाशयतया सहैव दुर्योधनस्याऽभिमानित्वं वर्णितम्। दुर्योधनः स्वमन्त्रिपरिषदि स्वसहयोगिभिः सह सम्यग्विचारपूर्वकं भीष्मं सम्भाव्यसंग्रामार्थं कौरवाणां सेनापतिपदे नियोजयति। अत्रान्तरे सहसा पाण्डवपक्षात् दूतरूपेण श्रीकृष्णः समागच्छति। वृत्तमिदमवगत्य दुर्योधनः स्वसहयोगिनः श्रीकृष्णस्वागतकरणान्निषेधयति। स्वयञ्च सः श्रीकृष्णस्यापमानं कर्तुं यतते। श्रीकृष्णः प्रविशति, सर्वे च सभासदः सहसोत्तिष्ठन्ति। दुर्योधनोऽपि व्यथितः सन् पतति। श्रीकृष्णोऽर्धराज्यं पाण्डवेभ्यो याचते। दुर्योधनः पाण्डवान् निन्दति। ततः श्रीकृष्णं ग्रहीतुं सर्वैः सभासद्भिर्निषेधे कृते, दुर्योधनः स्वयमग्रे सरति। श्रीकृष्णो विराजं रूपं गृह्णाति, दुर्योधनश्च किंकर्तव्यविमूढो भवति। अन्ते च धृतराष्ट्रः भगवतः श्रीकृष्णस्य पादयोः पतति। अत्र श्रीकृष्णदुर्योधनयोः कथोपकथने नाटकीयत्वस्य चरमं निदर्शनमस्ति।

(५) पञ्चरात्रम्—त्रयाणामङ्कानां नाटकेऽस्मिन् तथ्यकथ्ययोः सम्यक् सम्मिलनं जातम्। विराटपर्वणः कथासूत्रमाश्रित्य मनोरमस्याऽस्य नाटकस्य कविना कल्पनापूर्णा रचना विहिता। द्रोणाचार्यस्य दक्षिणारूपेण पाण्डवेभ्योऽर्ध-राज्यप्रदानस्य वचनदानम्, अज्ञातवासावस्थायां पञ्चरात्रिमध्य एव पाण्डवदर्शने सति दुर्योधनद्वाराऽर्धराज्यप्रदानञ्चैवाऽस्य नाटकस्य कथावस्तु वर्तते।

(६) दूतघटोत्कचम्—नाटकेऽस्मिन् अभिमन्युवधानन्तरमर्जुनेन कृतायां प्रतिज्ञायां श्रीकृष्णेन धृतराष्ट्रस्य समक्षं विनाशसूचनाय घटोत्कचस्य प्रेषणम्, अन्ते च भीषणसङ्ग्रामवृत्तं वर्णितमस्ति। अत्र नाटके उद्धतवीरघटोत्कच-दुर्योधनादीनां संवादवर्णनेऽतीव साफल्यमर्जितं कविना।

(७) कर्णभारम्—नाटकेऽस्मिन् कर्णेन ब्राह्मणवेषधारिणे देवेन्द्राय स्व-कवचकुण्डलदानं वर्णितमस्ति। अत्र कर्णस्योज्ज्वलचरित्रस्य दानशीलतायाश्च प्रभावशालि निरूपणं विहितमस्ति।

(८) मध्यमव्यायोगः—व्यायोगेऽस्मिन् मध्यमपाण्डव (भीम) द्वारा घटोत्क-चात् मध्यमब्राह्मणकुमारस्य परित्राणम्, हिडिम्बासाक्षात्कारवृत्तञ्च वर्णितमस्ति। पितरं नाभिजानतः पुत्रस्य घटोत्कचस्य धृष्टतापूर्वकं मातुः समक्षं पितुरुपस्थापन-मतीव सरसं कौतुकपूर्णं चाऽस्ति।

(९) प्रतिमानाटकम्—सप्तानामङ्कानां नाटकेऽस्मिन् श्रीरामवनवासा-दारभ्य रावणवधपर्यन्ता कथा वर्णिताऽस्ति। अत्र नाटके मातामहिगृहादयोध्या-नगरीं प्रत्यागच्छता भरतेन प्रतिमामन्दिरे स्वपितुः राज्ञो दशरथस्य प्रतिमां दिवङ्गतपूर्वजेषु दृष्ट्वा तन्मृत्योरनुमानकरणं वर्णितम्।

(१०) अभिषेकनाटकम्—नाटकेऽस्मिन् षडङ्कास्सन्ति। रामायणस्य किष्किन्धा-सुन्दर-युद्धकाण्डानां संक्षिप्तां कथामाश्रित्य कविनाऽस्य नाटकस्य कथावस्तु रचितम्, अन्ते च श्रीरामराज्याभिषेकोऽपि वर्णितः।

(११) अविमारकम्—नाटकेऽस्मिन् अविमारकस्य (विष्णुसेनस्य) राज्ञः कुन्तिभोजस्य पुत्र्या कुरङ्गया सह प्रेम्णः कथा वर्णिताऽस्ति। अविमारकस्य सङ्केतः कामसूत्रे उपलभ्यते। नाटकेऽस्मिन् प्रेम्णो मनोहरं सरसं च चित्रणमस्ति।

(१२) चारुदत्तम्—नाटकेऽस्मिन् चत्वारोऽङ्कास्सन्ति। अत्रोज्जयिन्याः

सार्थवाहस्य चारुदत्तस्य गणिकया वसन्तसेनया सह प्रेम्णः कथा निबद्धाऽस्ति। कथाया अस्या आधारो लोककथा एव प्रतीयन्ते।

(१३) **बालचरितम्**—नाटकेऽस्मिन् श्रीकृष्णजन्मन आरभ्य कंसवध-पर्यन्ताः कथाः वर्णिताः। अत्र नाटके पञ्चाङ्कास्सन्ति। नाटकेऽस्मिन् श्रीकृष्णस्य वालचरितस्याऽतीव सजीवं सरसञ्च वर्णनं विहितमस्ति।

—:०:—

## ५. माघे सन्ति त्रयो गुणाः

( सन् १९७७ ई० )

संस्कृतवाङ्मये महाकविमाघे पाण्डित्ययुक्तशैल्याश्चरमोत्कर्षो दृश्यते। कालिदासस्योपमा, भारवेरर्थगौरवम्, दण्डिनो हर्षस्य वा पदलालित्यं प्रसिद्धम्, परन्तु श्रीमाघे त्रयोऽपि गुणाः दरीदृश्यन्ते। अत एवोक्तम्—

'माघे सन्ति त्रयो गुणाः'

यद्यपि केषाञ्चिद् विदुषां मतमिदं यदेषा भणितिः कस्याऽपि माघभक्तस्योक्तिरेव। किन्तु वास्तवे विद्यतेऽत्रापि सत्यता। माघे कालिदासवदुपमावैशिष्ट्यं मा भूत्, किन्तु तस्य कमनीयोपमालङ्कृतिभिरलङ्कृता कविताकामिनी विराजत एव। एवमेव भारविवन्माघे केवलमात्रमर्थगौरवमेव मास्तु, परन्तु राजते तदीयकवितासु कमनीयमर्थगौरवमपि। माघस्य शब्दशय्या तु प्रसिद्धतमा, नात्र मनागपि शब्दक्रमविपर्ययो विधातुं शक्यते। तथा चोक्तम् संस्कृतवाङ्मयमर्मज्ञेन श्रीधर्मपालेन—

'माघेन विघ्नितोत्साहा नोत्सहन्ते पदक्रमे।
स्मरन्तो भारवेरेव कवयः कपयो यथा॥'

सर्वविधशास्त्रीयवैदुष्यसम्भृतस्य श्रीमाघस्य शब्दशास्त्रीयज्ञानं सर्वान् कविवरानतिशेते। यतो माघापरपर्याये शिशुपालवधे नवसर्गातिक्रान्ते सति नवशब्दो न कोऽपि वर्तते। तथा चोक्तम्—

'नवसर्गगते माघे नवशब्दो न विद्यते'

भारवेः प्रवाहितां कवीनां कलामयीं काव्यसरणिं विकासयताऽनेनाऽपि 'शब्दार्थौ सत्कविरिव द्वयं विद्वानपेक्षते' इति स्वीया काव्यपरिभाषा प्रदत्ता। महाकवेर्माघस्यैका प्रशस्यतरा शास्त्रीयोपमा कीदृशी चमत्कारिणी सती राजते साहित्यक्षेत्रे—

'अनुत्सूत्रपदन्यासा सद्वृत्तिः सन्निबन्धना।
शब्दविद्येव नो भाति राजनीतिरपस्पशा॥'

स्वमहाकाव्यस्य समारम्भे नारदागमनप्रस्तावे विद्यमानोपमा मोहयन्तीव मनांसि। अग्रेऽपि स्थले स्थले समायातामुपमां विलोक्याऽस्य महाकवेरुपमा-प्रावीण्ये संशयलेशस्य नाऽस्त्यवसरः। माघस्योपमासु राजते श्लोकोऽयमद्वितीयो यत्रस्थामुपमां समुपजीव्य माघस्य 'घण्टामाघः' इत्यपरमभिधानं विद्वद्वर्गे प्रचलितमभूत्—

'उदयति विततोर्ध्वरश्मिरज्जा-
वहिमरुचौ हिमधाम्नि याति चास्तम्।
वहति गिरिरयं विलम्बिघण्टा-
द्वयपरिवारितवारणेन्द्रलीलाम्॥'

अर्थगौरवक्षेत्रे तु निखिलशास्त्रेषु माघप्रतिभाया वैशिष्ट्यमद्वितीयमेव। यथा राजनीतिसिद्धान्तमूलभूतानां सहायादीनां पञ्चानां बौद्धदर्शनसर्वस्वानां रूपवेदनादि-पञ्चानाञ्चाङ्गस्कन्धानां सादृश्यं समुपस्थापयन् प्रसिद्धोऽयं श्लोकः—

'सर्वकार्यशरीरेषु मुक्त्वाङ्गस्कन्धपञ्चकम्।
सौगतानामिवात्मान्यो नास्ति मन्त्रो महीभृताम्॥'

दण्डिनो हर्षस्य वा पदलालित्यं प्रसिद्धमेव, परन्तु माघस्यापि पदलालित्यं न नैयून्यमावहति। माघेन काव्यारम्भ एव स्वीयं पदलालित्यं प्रकटितम्। प्रसिद्धञ्चेदं पद्यं तत्पदलालित्ये—

'मधुरया मधुबोधितमाधवी मधुसमृद्धिसमेधितमेधया।
मधुकराङ्गनया मुहुरुन्मदध्वनिभृता निभृताक्षरमुज्जगे॥

माघकवेः पदलालित्यस्यैकमन्यदुदाहरणं दृश्यताम्—

नवपलाशपलाशवनं पुरः स्फुटपरागपरागतपङ्कजम्।
मृदुलतान्तलतान्तमलोकयत् ससुरभिं सुरभिं सुमनोहरैः॥

अत्रापि शब्दशय्यायां भासते भगवती भारती। अतएव 'माघेनेव च माघेन कम्पः कस्य न जायते' इत्यादयो यथार्थाः सूक्तयः सञ्चरन्ति। इत्थं पर्यालोचनेन ज्ञायते यन्महाकविशेखरे श्रीमाघेऽलङ्कृतिनिवेशकुशलता, महतोऽर्थस्य स्वल्पशब्दैः प्रतिपादनक्षमता, समुचितसादृश्यशोभिशब्दसन्निवेशविशिष्टता च विभासते। अत एव सत्यमेवोक्तम्—

'माघे सन्ति त्रयो गुणाः'।

—:०:—

## ६. वाराणसी

### ( सन् १९७८, ८२, ८३ ई० )

'वरुणा' 'असी' इत्यनयोर्मध्ये स्थितेयं वाराणसीनगरी भारतस्य श्रेष्ठा, प्राचीनतमा च नगरी सर्वेषु तीर्थेषु च पवित्रतमं तीर्थं वर्तते। सन्त्यनेकानि तीर्थान्यस्मिन् भारतवर्षे। महर्षिसेवितजलमेव तीर्थमिति प्रसिद्धम्। कल्मषशून्यैर्महात्मभिः सेविताः प्रदेशाः पवित्राः पूज्याश्च भवन्ति। गङ्गातटे स्थितत्वादियं नगरी खलु तीर्थम्। यथा 'जरुसलम' ख्रिस्तीयानाम्, यथा वा 'मक्का' मोहम्मदीयानां तथैव वाराणसी आर्याणां भक्तिभाजनं श्रद्धास्पदञ्च तीर्थं वर्तते।

काशीजनपदस्य काशिराजस्य चोल्लेखोऽनेकेषु ग्रन्थेषूपलभ्यते। पतितपावन्याः गङ्गायास्तटे स्थितेयं वाराणसी कदाचित् 'काशी' जनपदस्य राजधानी आसीत्।

'काश्यां मरणान्मुक्ति'रिति श्रद्दधाना वृद्धावस्थायां शिक्षिता अशिक्षिता वा धनिका निर्धना वेह वसन्ति मृत्युप्रतीक्षाञ्च कुर्वन्ति।

सेयं वाराणसी कदा प्रतिष्ठामगमदिति न सम्यग् ज्ञायते। अत्रैव भगवतः श्रीकृष्णस्य गुरोः सान्दीपनेराचार्यस्याऽऽवास आसीत्। अत्रैव चेक्ष्वाकुकुलोत्पन्नो राजर्षिः सत्यसन्धः श्रीहरिश्चन्द्रः आत्मनश्चाण्डालाय विक्रयं चकार, धर्मविजयं चाऽवाप। इदञ्च दृढतरं प्रतीयते यदा भगवान् बुद्धः सारनाथे मृगदावस्थले धर्मानुशासनमकरोत्तदाऽपि वाराणसी परमविदुषां ब्राह्मणानामावास आसीत्। शङ्कराचार्य-वल्लभाचार्य-रामानुजाचार्य-रामानन्दाचार्य-कबीरदास-तुलसीदास-

महर्षिदयानन्दप्रभृतिर्विभिन्नैर्महात्मभिरत्रैवोषित्वा स्वस्वधर्मप्रचारो विहितः। अतः वाराणसी सनातनविचाराणां सिद्धपीठम्, तीर्थानां देवतानाञ्च सम्मिलनं मन्दिरम्, विभिन्नानां धर्माणाञ्च न्यायालयोऽस्ति।

इदं ह्यार्याणां पुण्यतमं तीर्थमित्यसहमाना धर्मान्धा अन्यधर्मद्वेषिणः तुरुष्का मुगलाद्याश्च पुनःपुनर्वाराणस्यामाक्रमणानि कृत्वा मन्दिराणां दुर्दशां भ्रंशं चाऽकुर्वन्। अवरङ्गजीवहतकेन तु श्रीविश्वनाथमन्दिरमपि खण्डितम्। तत्र च स मस्जिदस्य निर्माणमकारयत्। परं वाराणसीसुषमा त्वद्यापि सैव। सामगानां पुण्यो वेदध्वनिः कर्णरन्ध्रे प्रविश्य पवित्रं हि तत् करोति। अद्यापि शास्त्रार्थप्रवृत्तानां विप्राणां कलकलो दिक्षु प्रसरति। अद्यापीदं पुण्यतमं तीर्थमिति श्रद्धया समागच्छन्ति लक्षशो यात्रिकाः।

गङ्गानद्याः विस्तृते तटे स्थितेयं नगरी 'मन्दिराणां नगरी' वर्तते। भारतस्य कस्मिंश्चिदप्ये कस्मिन् नगरे एतावन्तो देवालयाः न सन्ति। राष्ट्रेऽस्मिन् कुत्रचिदपि भारतमातामन्दिरं नास्ति, यदस्यां नगर्यां विराजते। भारतवर्षे वाराणस्येवेतादृशी नगरी, यत्र त्रयो विश्वविद्यालयाः वर्तन्ते। तत्र प्रथमस्तावत्-महामनामदनमोहनमालवीयमहोदयसंस्थापितः काशीहिन्दूविश्वविद्यालयः पौरस्त्यपाश्चात्यविद्यानामध्ययनाध्यापनकेन्द्रं वर्तते। द्वितीयस्तावत् 'डाक्टरसम्पूर्णानन्दसंस्कृतविश्वविद्यालयः' विश्वस्मिन्नद्वितीयो विश्वविद्यालयोऽस्ति। गीर्वाणवाणीगौरवप्रतिष्ठागृहीतावताराः संस्कृतानुरागिणः माननीयाः डाक्टररामकरणशर्ममहाभागाः विश्वविद्यालयस्याऽस्य कुलपतिपदमलङ्कुर्वाणाः नानाविघ्नसङ्कटापन्नां सुरभारतीं यत्नेन परिपालयन्ति। अस्मिन्नेव विश्वविद्यालये प्राचीनहस्तलिखितग्रन्थानां भाण्डागारो 'सरस्वतीभवन' नाम्ना राराजते। तृतीयश्च तावत् राष्ट्ररत्नशिवप्रसादगुप्तसंस्थापितो विश्वविद्यालयः 'काशीविद्यापीठ' नामाभिधेयः राष्ट्रियदृष्टिकोणेन शिक्षाप्रदायकः समाजशास्त्रादीनाञ्चाध्ययनकेन्द्रमस्ति। अतो वाराणसी नगरीयमद्यापि प्राचीनाऽर्वाचीनोभयविधशिक्षाणां प्रधानं केन्द्रं वर्तते।

—:o:—

## ७. विद्या अथवा विद्याधनं सर्वधनप्रधानम्

विद्याशब्दो ज्ञानार्थकाद् विद् धातोः साध्यते, एवञ्च कतिपयानां वाक्यानां, गणितप्रकाराणां, वैज्ञानिकाऽऽविष्काराणां ज्ञानं विद्येति वक्तुं शक्यते। परमीदृशार्थसमर्थनं सङ्कुचितवाक्यतामस्य शब्दस्य प्रकाशयेदतश्च—मनुष्यस्य सुप्ताः स्वाभाविक्यः शक्तयो बोध्येरन्, लौकिकपारलौकिकविषयाणां वास्तविकं ज्ञानं चोत्पाद्येत सा विद्येति परिभाषामाद्रियन्ते विद्वांसः, वस्तुतत्त्वमीमांसयाऽपि न केवलं कस्यचिद् ग्रन्थस्य कण्ठस्थीकरणं, तदर्थावगममात्रं वा विद्यां वक्तुं युज्यते अनग्नौ हुतस्येव तावतो ज्ञानप्राग्भागस्याऽकार्यकरत्वात्।

मनुष्याणां हृदयेऽन्धतमसावृते बहुविधा नानाविषयाश्च शक्तयस्तिष्ठन्ति, ता न स्वतः प्रकाशन्ते, विद्यया दूरीकृते तस्मिंस्तमसि तेजोऽवरोधिनि तास्ताः शक्तयः प्रकाशमासाद्य पुमांसं प्रतिष्ठामानयन्ति। तेनैव च प्रकाशेन मनुष्याणां शीलं शुद्धयति, स्वभावो विवेकभाग्भवति, चरित्रं चारुतामञ्चति, वार्त्तालापः परिपक्वप्रबोधो भवति। येषां विषयाणां ज्ञानं मूर्खा मनुष्याः शतवत्सरमितकालेनाऽपि नाशासते, तानेव विषयान् विद्वांसः क्षणेन प्रत्यक्षेणेवेक्षन्ते।

इह जगति विद्यैव सर्वधनप्रधानमस्ति। इदं धनं न केनापि चोरयितुं शक्यते। अत्यन्तनिपुणाश्चौराः विद्याधनं कौशलेनाऽपि चोरयितुं न शक्नुवन्ति, परन्तु तेऽन्यधनं लीलयैव हर्तुं पारयन्ति। क्रूरोऽपि राजा विद्याधनं हर्तुं न प्रभवति। भ्रातरो विद्याधनं न विभक्तुं प्रभवन्ति। अतो भ्रातॄणां मध्ये धनविभाजनसमये विद्यायाः विभाजनं न क्रियते। धनस्य राशिर्भारयुक्तो भवति, परन्तु विद्याधनं कदापि भारकारि न भवति। विद्या व्ययकरणेन सदा वर्धते। तदुक्तम्—

'न चौरहार्यं न च राजहार्यं न भ्रातृभाज्यं न च भारकारि।
व्यये कृते वर्धत एव नित्यम् विद्याधनं सर्वधनप्रधानम्॥'
'धनं धनं नैव मतम् बुधानां विद्यैव वित्तं मतमस्ति तेषाम्।
चौरो न यां चोरयितुं समर्थो भूपोऽपहर्तुं न च याम् समर्थः॥'

विद्या माता इव रक्षति, पिता इव हिते नियुङ्क्ते, कान्ता इव खेदमपनीयाऽभिरमयति। विद्या कल्पलतेव सर्वकार्यसाधिकाऽस्ति। तदुक्तम्—

'मातेव रक्षति पितेव हिते नियुङ्क्ते
कान्तेव चाभिरमयत्यनीय खेदम्।
लक्ष्मीं तनोति वितनोति च दिक्षु कीर्ति
किं किं न साधयति कल्पलतेव विद्या ॥'

विद्या नरस्य समुन्नतिपथं विशदीकरोति, बुद्धि प्रखरीकरोति, कर्त्तव्यपालनपरां धियमादधाति। अत एवेह लोके विद्याधनं सर्वश्रेष्ठं धनमस्ति। सुखस्य परमं कारणं विद्यैव। अन्नेन तु क्षणिका तृप्तिर्जायते, किन्तु विद्यया जीवनकालपर्यन्तं तृप्तिर्भवति। उक्तञ्च—

'विद्या समुन्नतिपथं विशदीकरोति
बुद्धि विचारविषये प्रखरीकरोति।
कर्तव्यपालनपरां धियमादधाति
विद्या सखा परमबन्धुरथेह लोके ॥'

अपि च—

अन्नदानं परं दानं विद्यादानं ततः परम्।
अन्नेन क्षणिका तृप्तिर्यावज्जीवं तु विद्यया ॥

सा चैवं विद्या न केवलं पुस्तकानामध्ययनेन साध्या, तावता तु तस्या भूमिकामात्रं निर्मीयते। प्राकृतस्य संसारस्य पर्यवेक्षणं, स्वाधीतग्रन्थजन्यज्ञानकृतविवेकस्योपयोगं च विद्यामभिदध्मः। यद्यधीतवतोऽपि मनसि विवेकः पदे नादधाति, वृथा तदा समारम्भः। किञ्च सर्वो व्ययो वृथा। पञ्चनदेषु लब्धजन्मा रणजीतसिंहो नाक्षरमपि पर्यचिनोत्, परं सकृत्समग्रमपि भारतमधिकर्तुं स्वप्नमद्राक्षीत्।

विद्यायाश्च लाभाय सर्वविधोऽपि प्रयत्नो न दुष्यति। स्थाने मानं विमानं वाऽस्या उपलब्धये न विवेचयन्ति सन्तः। नराणां बालेभ्योऽपि विद्यालाभसम्भवे तदनादरभीतिनिवर्त्तकप्रसङ्गेन विद्यायाः महिमा गीयते। अतश्च यथारुचि यथाशक्ति विद्या शिक्षणीया सर्वैः।

—:०:—

## ८. विद्या ददाति विनयम्
## (सन् १९७८ ई०)

असारेऽस्मिन् संसारे वर्तते विद्यायाः सर्वविधं वैशिष्ट्यमिति जानन्त्येव विद्वांसः। 'वेद्यते अनया इति विद्या' इति विग्रहे ज्ञानार्थकाद् विद् धातोर्निष्पन्नः' विद्या शब्दः स्वगौरवं प्रकटयति। विद्या विनयेन शोभते।

विद्या विनयं ददाति, विनयेन च मनुष्यः पात्रतां याति, पात्रत्वाद् धनमाप्नोति। धनाद् धर्मं भवति। धनेन मनुष्यो दानं ददाति, तथा च धर्मशाला-निर्माण-मन्दिरजीर्णोद्धार-तीर्थाटनादिना धर्मस्य सञ्चयं करोति। ततः सुखं प्राप्यते। तदुक्तम्—

'विद्या ददाति विनयं विनयाद्याति पात्रताम्।
पात्रत्वाद्धनमाप्नोति धनाद्धर्मं ततः सुखम्॥'

विद्यया मनुष्य आत्मपरमात्मनोरभेदं पश्यति। क्रमशः स ब्रह्म जानाति, तथा तज्ज्ञात्वा तद्रूपो भवति। श्रुतिभिरपि प्रतिपादितम् यद् 'ब्रह्मविद् ब्रह्मैव भवति', ऋते ज्ञानान्न मुक्तिः' इति। अतएव मोक्षावाप्तये विद्यायाः परमावश्यकता वर्तते। उक्तञ्च—

'सा विद्या या विमुक्तये।'

अपि च—

'तपो विद्या च विप्रस्य निःश्रेयसकरं परम्।
तपसा किल्विषं हन्ति विद्ययाऽमृतमश्नुते॥'

विद्या व्ययतो वृद्धिमायाति, सञ्चयाच्च क्षयमायाति। उक्तञ्च—

'अपूर्वः कोऽपि कोशोऽयं विद्यते तव भारति!
व्ययतो वृद्धिमायाति क्षयमायाति सञ्चयात्॥'
'विद्याधनं श्रेष्ठधनं तन्मूलमितरद्धनम्।
दानेन वर्धते नित्यम् न भाराय च नीयते॥'

चन्द्रो नक्षत्राणां भूषणम्, पतिर्नारीणां भूषणम्, राजा पृथिव्याः भूषणम्, किन्तु विद्या सर्वस्य भूषणमस्ति। विदुषः पुरुषस्य सर्वत्रैव सम्मानो भवति। राजा तु स्वदेशे पूज्यते, परन्तु विद्वान् सर्वत्र पूज्यते। तदुक्तम्—

'नक्षत्रभूषणं चन्द्रो नारीणां भूषणं पतिः ।
पृथिव्याः भूषणं राजा विद्या सर्वस्य भूषणम् ॥'
'विद्वत्त्वं च नृपत्त्वं च नैव तुल्यं कदाचन ।
स्वदेशे पूज्यते राजा विद्वान् सर्वत्र पूज्यते ॥'

अतोऽवश्यमेव विद्याध्ययनं विधेयम् ।

—:०:—

## ९. सा विद्या या विमुक्तये
## अथवा
## या विद्या सा मुक्तये
## अथवा
## विद्ययाऽमृतमश्नुते
## ( सन् १९७९ ई० )

अस्मिन् संसारे प्रायः सर्वेऽपि विद्वांसः कामयन्ते यत् कथमपि मोक्षप्राप्तिर्भवेत् । भगवती श्रुतिः 'ऋते ज्ञानान्न मुक्तिः' इत्येवं रीत्या ज्ञानस्यैव मोक्षोपायतां वदति । विद्या च ज्ञानफलैव, अतो विद्याया मोक्षोपायता सर्ववादिसमता वर्तते । विद्या एव संसारदावानलदग्धस्य जन्ममरणप्रवाहपतितस्य मनुष्यस्य कृते मोक्षप्रदायिनी वर्तते । तथा च 'सा विद्या विमुक्तये' इति सूक्तिः समुल्लसति विदुषां मनसि । 'विद्ययाऽमृतमश्नुते' इति वेदवाक्यमपि विद्यया एव अमृतपदवाच्यस्य मोक्षस्य प्राप्तिर्भवतीति सूचयति । इयं विद्या 'परा विद्या' नाम्ना शास्त्रेषूपदिष्टा ।

द्वितीया च सांसारिकी विद्या 'अपरा विद्या' इति नाम्ना शास्त्रेषु समुपदिष्टा । वर्तमानाया शताब्द्या उत्तरार्द्धे अनया विद्यया द्रुततरं चरमोन्नतिरवाप्ता । शतशो जनाः विविधान् भारांश्च गृहीत्वा निरालम्वे वियन्मार्गे गमनागमनं विदधति, वायुयानानि बाष्पयानानि च सहस्रशो मानवानितस्ततो नयन्ति । सलिलतो

यन्त्रबलेन निस्सारिता विद्युत् विविधानि कार्याणि कुर्वन्ती दरीदृश्यते। कोटिशः क्रोशानामन्तरे स्थितोऽपि जनः स्वाभीष्टजनेन सह वार्तालापसुखं विज्ञानबलेनैव सर्वथाऽनुभवति, नानाविधदेशीयानि रेडियोस्थानानि स्वीकार्यक्रमान् प्रसारयन्ति।

विद्यया मनुष्य आत्मपरमात्मनोरभेदं पश्यति। क्रमशः सः ब्रह्म जानाति तथा तज्ज्ञात्वा तद्रूपो भवति। श्रुतिभिरपि प्रतिपादितं यद्—'ब्रह्मविद् ब्रह्मैव भवति', 'ऋते ज्ञानान्न मुक्तिः' इति। अत एव मुक्तौ ज्ञानस्य परमावश्यकता वर्तते। अनेन विधिना मनुष्यः स्वजीवनस्य समग्रं फलं चतुर्वर्गाख्यरूपम् धर्माऽर्थ-काममोक्षाभिधं विद्ययैव प्राप्नोति। तथा चोक्तम्—

'सा विद्या या विमुक्तये।'

अपि च—

'तपो विद्या च विप्रस्य निःश्रेयसकरं परम्।
तपसा किल्विषं हन्ति विद्ययाऽमृतमश्नुते॥'

—:०:—

## १०. विद्याविहीनः पशुः
## ( सन् १९८२ ई० )

असारेऽस्मिन् संसारे वर्तते विद्याया सर्वविधं वैशिष्ट्यमिति विदन्त्येव विद्वांसः। 'वेद्यते अनया इति विद्या' इति विग्रहे ज्ञानार्थकाद् विद् धातोर्निष्पन्नो 'विद्या' शब्दः स्वगौरवं प्रकटयति। विद्यैव तद्वस्तु येन मानवस्य पशोश्च भेदः कर्तुं शक्यते। अत एव नीतिशतककारेण श्रीभर्तृहरिणा 'विद्याविहीनः पशुः' इति सुस्पष्टमेव विद्यावैशिष्ट्यं वर्णितम्।

यः पुरुषो विद्याविहीनोऽस्ति, स असभ्यो ग्रामीणः, मूर्खः, निरक्षरभट्टाचार्य इत्याद्यनेकैरुपाधिभिर्विभूष्यते जनैः। किं बहुना, साहित्यसंगीताभ्यां विरहितस्य पुरुषस्य तु साक्षात् पशुरिति नाम कृतं श्रीमता भर्तृहरिणा। तथा हि—

'साहित्यसङ्गीतकलाविहीनः
साक्षात् पशुः पुच्छविषाणहीनः।
तृणं न खादन्नपि जीवमान-
स्तद्भागधेयं परमं पशूनाम्॥'

आहारनिद्राभयमैथुनानि पशुमनुष्ययोः समानानि । विद्यैव तयोर्भेदबुद्धिमुत्पादयति । को धर्मः, कोऽधर्मः इति विद्ययैव ज्ञातुं शक्यते । अत एव विद्याविरहितस्य पुरुषस्य तुलना पशुनाऽतीव समीचीना वर्तते । मूर्खस्य जीवनं व्यर्थमेव । यतः स न किमपि कर्तुं प्रभवति । विद्वद्भिस्तस्य निरादरः क्रियते, जनैः स उपहस्यते, विचारशीलैर्नाद्रियते । स तु धराया भारभूत एव तिष्ठति ।

रूपयौवनसम्पन्नोऽपि जनो विद्याविहीनो न शोभते । तथा चोक्तम्—

'रूपयौवनसम्पन्ना विशालकुलसम्भवाः ।
विद्याहीनाः न शोभन्ते निर्गन्धा इव किंशुकाः ।।'

अपि च—

'माता शत्रुः पिता वैरी येन बालो न पाठितः ।
न शोभते सभामध्ये हंसमध्ये बको यथा ।।'

विद्या नरस्याऽधिकं रूपम्, गुप्तं धनम्, गुरूणां गुरुः, विदेशगमने च बन्धुजनोऽस्ति । राजसु विद्यैव पूज्यते, न धनम्, विद्यया विहीनो जनस्तु पशुवदेव भवति । तथा चोक्तम् श्रीभर्तृहरिणा—

'विद्या नाम नरस्य रूपमधिकं प्रच्छन्नगुप्तं धनम्
विद्या भोगकरी यशः सुखकारी विद्या गुरूणां गुरुः ।
विद्या बन्धुजनो विदेशगमने विद्या परं दैवतम्
विद्या राजसु पूज्यते नहि धनम् विद्याविहीनः पशुः ।।'

अतश्च यथारुचि यथाशक्ति विद्या शिक्षणीया सर्वैः ।

—:०:—

## ११. स्त्रीशिक्षाया आवश्यकतोपयोगिता च

(सन् १९७७ ई०)

येन शारीरिक-मानसिक-नैतिकशक्तीनां मनुष्यगतानां विकासः सञ्जायेत तदेव शिक्षापदेनाऽभिधीयते । मनुष्याणां हि सर्वाः शक्तयः शिक्षया विकसन्ति, विकसितशक्तयश्च लोकाः स्वं कर्तव्यं परिचिन्वन्ति, आचरणं परिनिष्ठापयन्ति, धर्ममनुरुध्यन्ते । अतो यया शिक्षया स्त्रियः स्वं कर्तव्यं परिज्ञाय स्वे धर्माचरणे पालयेयुः सा स्त्रीशिक्षा कथ्यते ।

पुरुषाणां सहायतया परिवारस्य पालनम्, स्ववालकेषु गुणगणसाहसोत्पादनं सांसारिककार्यक्लिष्टानां पतिपुत्रादिप्रियपरिवारपरिजनानां स्वैर्मधुरैरालापैः प्रसादनं च स्त्रीशिक्षाया लाभमाहुर्विचारकाः। यदि साध्वी शिक्षा न स्त्रीभिरधिगता, कार्याणीमानि साधु न सिद्धचन्ति, वैरस्येन वैषम्येण च क्रियमाणान्यपि कार्याणि न सन्तोषावहानि भवन्ति। बहवो जनाः स्त्रीणां शिक्षायां विप्रतिपद्यन्ते, तेषां हि मते ताः पाके, गृहप्रबन्धे, वालानां पोषणे चाधिक्रियेरन्, शिक्षिताः सत्यो हि स्त्रियो नश्यन्ति, लब्धाध्ययनप्रकाशाश्च ताः पुरुषैः सह स्पर्द्धेरन्, परमिदं तेषां दुरुक्तं पुरतः प्रदर्श्यमानाभिर्युक्तिभिर्निराकरिष्यते।

पाकशालाप्रबन्धो न सर्वसाधारणानुष्ठेयः तदर्थमपि ज्ञानराशिरपेक्ष्यते, अत एव च द्वित्रा नलभीमादय एव पाकपण्डिताः परिगणिताः, अत्र विषये नलपाकप्रभृतयो ग्रन्था अपि दृश्यन्ते, न चान्तरे। साधीयसीं शिक्षां कस्याऽपि पाककलायामीदृश्यां सम्भवति प्रवेशः। अतः स्त्रीशिक्षाऽपेक्षिता।

स्त्रियो हि गृहाधिष्ठात्र्यो मन्यन्ते, जगति यावन्तोऽभ्युदयभाजो दृश्यन्ते जनास्तेषां देव्योऽवश्यं प्रबन्धचतुराः स्युः, अन्यथा वह्वर्जयन्तोऽपि पुरुषाः स्त्रीभिरनावश्यकवृथाव्ययविनियुक्तधनास्सन्तोऽत्यर्थमुद्विजेयुः, क्लेशं च सहेरन्।

वालाः शिक्षिताः स्युरित्यपि गृहस्थानां कर्त्तव्येषु प्रधानं कर्त्तव्यम्। एतच्च कार्यं यथा दयाद्रुतचित्ताभिः स्त्रीभिः साधु सम्पाद्येत न तथा पुरुषैः, अशिक्षिताश्च मातरः कथमिव तदनुष्ठाने प्रभवेयुः। अतः वृथाद्रव्यव्ययं विना सन्ततीनां जीवनं साधुशिक्षया समुत्कर्षयितुमपि स्त्रीशिक्षाऽऽवश्यकी।

'सत्यां शिक्षायां स्त्रियो नश्यन्ति' इति यदुक्तं न तन्मनोहरं, सत्यां दुश्शिक्षायां तथा भवति, हेया च सा, परं शिक्षा तु तासां पातिव्रत्ये निष्ठां, प्रेमपरायणतां, आदर्शपत्नीपदगौरवं च समेधयति।

शिक्षिताः स्त्रियः पुरुषैः स्पर्द्धेरन्नित्यप्यलीकमेव वचः, शिक्षया जनितविवेकानां तासां कर्त्तव्यज्ञानोदये जाते स्पर्द्धाबुद्धेरेव वाधपराहतेः। प्राचीनमादर्शं पुरतः कृत्वा प्रदीयमानया शिक्षया मनसः साधुपथे प्रवृत्तिः सम्पाद्यते तथा च स्पर्द्धायाः कथैव नोदयते।

साधुनि तत्त्वावधाने भारतीयमादर्शं पुरस्कृत्य दीयमानया स्त्रीशिक्षया देशस्य

समाजस्य जातेश्चोपकारो भविष्यति। स्त्रीणां शिक्षायाञ्च—परिवारपरिचालन-प्रकारः, चिकित्साशास्त्रम्, इतिहासभूगोलौ, नीतिशास्त्रमित्येते विषयाः नियुज्यमानाः स्युः। स्त्रीणां कृते विश्वविद्यालयीयोपाधिप्राप्तिर्नापेक्षिता, न वा केवलमक्षरमक्षिकापरिचयमात्रमुपयुज्यते, उभयथापि दोषदर्शनात्, अतिशयितशिक्षाया गृहप्रबन्धेऽनुपयुक्तत्वादक्षरज्ञानमात्रेण च शिक्षोद्देश्यासिद्धेः। अतः साधु विविच्य निर्धार्यमाणा शिक्षापद्धतिः स्त्रीणां सुखोदर्काय युज्यते।

यस्मिन् परिवारे स्त्रियो न शिक्षिताः, सत्यं स परिवारो दुःखभाक्. कलहास्यवैराणां सततप्रतिष्ठानास्पदस्य तादृशस्य परिवारस्य दुःखभागिताया अविवादसिद्धत्वात्, दारिद्र्यं, बालमूर्खत्वं, परस्परमप्रीतिश्च सदा वसतीति ध्यात्वा सर्वैः स्वाः बालिकाः शिक्षणीयाः, स्त्रीणां शिक्षया हि कुलमुज्ज्वलं श्रीसमृद्धिश्च भविष्यतीति।

—:०:—

## १२. सहसा विदधीत न क्रियाम्

### ( सन् १९७७ ई० )

'मत्वा कर्माणि सीव्यन्तीति मनुष्या' इति नैरुक्ता मनुष्यशब्दव्युत्पत्तिमाचक्षते। मनुष्या सम्यग् विचार्य किञ्चित् कुर्वन्ति। परन्तु न सर्वे मनुष्या एवंविधा भवन्ति। विवेकं विहाय सहसा न किञ्चिद् विधेयम्, यतो ह्यविवेकेनाऽनेका विपत्तय आगच्छन्ति। तथा चोक्तम्—

'सहसा विदधीत न क्रियामविवेकः परमापदां पदम्।'

अस्माभिर्दृश्यते यदनेके बुद्धिमन्तोऽपि मनुष्याः बहुधाऽविचार्य कार्यं कुर्वन्ति। तत्र क्वचिद् लोभः, क्वचित् क्रोधः, क्वचिद् वा प्रणयातिरेकः कारणतां याति। कःपरिणामो भविष्यति ममाऽस्य कर्मण इत्यविचार्य प्रवृत्तो मनुष्यो महतामापदां भाजनं भवति। अतो य इच्छेत् सुविहितानि मे कर्माणि फलवन्ति स्युः, विपदश्च मां नोपसर्पेयुः, सः इदं प्रास्ताविकमिदमप्रास्ताविकम्, इदं साध्वसाधु, इदं फलवदिदं निष्फलमिति सुविचिन्त्य किञ्चित् कार्यंप्रारभेत। तथा चोक्तम्—

'गुणवदगुणवद्वा कुर्वता कार्यजातं
परिणतिरवधार्या यत्नतः पण्डितेन।
अतिरभसकृतानां कर्मणामाविपत्ते-
र्भवति हृदयदाही शल्यतुल्यो विपाकः ॥' इति।

'गुरुलाघवमर्थानामारम्भे कर्मणां फलम्।
दोषं यो न विजानाति स बाल इति होच्यते॥
अविज्ञाय फलं यो हि कर्म त्वेवानुधावति।
स शोचेत्फलवेलायां यथा किंशुकसेवकः॥' इति च।

अविवेकस्याऽनेके दुष्परिणामाः भवन्तीति पश्यामः। जानक्या लक्ष्मणं प्रति 'भ्रातृजायां मां जायामिच्छसि, तत एव जीवितसंशये वर्तमानस्य भ्रातुरार्तरवं शृण्वन्नपि तमभ्युपपत्तुं न यासी'ति यदुक्तं तत्तस्य मर्मभिदिवासीत्। ततश्चातीव खिन्नो लक्ष्मणः कुटीरान्निष्क्रान्तः, रावणश्च साधुवेषेण कुटीरं भिक्षाटनव्याजेन समागतः, सीताञ्च जहार। एवमविवेकस्याऽनेके दुष्परिणामा इति कृत्वा सहसा किञ्चित् कार्यं न विधेयम्, अपितु सम्यग् विचार्यैव किञ्चित् करणीयम्, अविवेकस्यापदां मूलत्वात्।

—:०:—

## १३. छात्रकर्त्तव्यम्

( सन् १९७८ ई० )

मानवजीवनस्य परमाह्लादमयी मङ्गलमयी प्रभातवेला छात्रावस्थैव वर्तते। अस्यामेवाऽवस्थायां स यादृशं वृत्तं समुपचिनोति, तेनैव च समस्ताया जीवनयात्राया निर्वाहं करोति। अत एव छात्राणामुज्ज्वलभविष्यस्य कामनयाऽभिभावकैर्विविधक्लेशानपि समुपेक्ष्य तेषां शिक्षणादिव्यवस्था यथाशक्ति विधीयते।

वस्तुत इयमवस्था शिक्षणावस्थैव वर्तते। छात्राः स्वां स्वल्पां शेमुषीमवलम्ब्य केवलमात्रं तदात्व एव सुखं कामयमाना स्वभविष्यविचारे समर्था न भवन्ति। अत एव प्रायस्ते गुरुजनानाम्, अभिभावकानाञ्चानुशासनं दुःखप्रदमेव मन्यन्ते। यद्यपि

तत्तदा दुःखदमिव प्रतिभाति, तदपि ज्वरिताय लङ्घनमिव तत्परिणामे सुखमेवाऽनल्पं प्रसूते। अतो विद्यार्थिनां प्रथममिदमेव कर्तव्यं यत्तैरनुशासने स्थेयम्।

'विद्यार्थी' शब्दोऽयं स्वत एव विद्याकामितां वदति, अतो विविधान् विद्याध्ययनविघ्नान् विहाय सर्वतोभावेन विद्यायाः समुपार्जनमेव कर्तव्यम्, किन्तु वर्तमानकालस्य परिस्थितीनां पर्यालोचनेन छात्रा अस्मिन् कर्तव्ये विरता इव प्रायः परिलक्ष्यन्ते। ते पाश्चात्यपरम्पराया अन्धानुकरणं कुर्वन्तः केवलं वेशभूषादिविन्यासं वहन्तो व्यर्थमेव वादविवादं कुर्वन्तोऽनुशासनभङ्गमेव स्वतन्त्रतामुद्घोषयन्तः समस्तमेव सत्रकालमतिवाहयन्ति, परीक्षाकाले च योग्यतामुपेक्ष्य येन केनाऽपि प्रकारेणाऽनुचितसाधनप्रयोगद्वारा परीक्षोत्तरणाय प्रयतन्ते। किन्तु तदा ते न विचारयन्ति, यदनेन क्षणिकसुखेन वस्तुतः ते कुठारेण स्वोन्नतिलतिकामेव छिन्दन्ति। विद्याध्ययनकालस्तपस्याकाल एव वर्तते। अत एवाऽस्मिन् काले लौकिकसुखेभ्यो विरतिरवश्यमेवाऽपेक्षते। तस्मात् सर्वाणि सुखानि विहाय विद्याया अध्ययने संलग्नो भवेत्। नहि किमपि क्षणं विद्याया अध्ययनं विना व्यर्थमेव परिहातव्यम्। तथा चोक्तम्—

> 'क्षणशः कणशश्चैव विद्यामर्थञ्च साधयेत्।
> क्षणे नष्टे कुतो विद्या कणे नष्टे कुतो धनम्॥
> सुखार्थी चेत् त्यजेद्विद्यां विद्यार्थी चेत् त्यजेत् सुखम्।
> सुखार्थिनः कुतो विद्या कुतो विद्यार्थिनः सुखम्॥'

न केवलं पूर्वोक्ता सूक्तिरेव विद्यते, परन्तु महापुरुषैः स्वजीवने निदर्शनीकृताऽप्येषा परिलक्ष्यते। भारतस्य महायशस्विनं प्रधानमन्त्रिणं श्रीलालबहादुरशास्त्रिणं को न वेत्ति। यतोऽमीषां नाम कर्तव्यबलेन भारतीयेतिहासपृष्ठेषु स्वर्णाक्षरैर्लिखितं वर्तते। स्वबाल्यकाले रामनगरे निवासभाजिनः एते महाभागा प्रत्यहं भागीरथीं स्वबाहुभ्यां तीर्त्वा वाराणसीं विद्याध्ययनार्थमागच्छन्ति स्म। वङ्गभूमिभूषणानां श्रीमदीश्वरचन्द्रविद्यासागरमहाशयानां विद्यालयगमनस्य नियम एतादृशः समयानुस्यूत आसीत्, यत्तेषां गमनवेलायां जनाः स्वीयघटिकां सम्मेलयन्ति स्म।

प्राचीनकालेन विविधानि निदर्शनानि दृश्यन्ते, यत्र स्वीयां महत्तां परित्यज्य

विद्याध्ययनकाले महद्भिरपि महान्ति कष्टानि सोढानि । श्रीकृष्णचन्द्रस्य गुरुगृहे निवासकाले काष्ठसञ्चयकथा आरुणेरुद्दालकस्य गुरुसेवा इत्यादिका विविधाः कथाः तत्त्वमिदमेव द्रढयन्ति । विद्यार्थिकर्तव्यविषये केनापि कलितं पद्यमिदं युक्तमेव—

'काकचेष्टा बकध्यानं
श्वाननिद्रा तथैव च ।
अल्पाहारो गृहत्यागो
विद्यार्थिपञ्चलक्षणम् ॥'

यथा काकः सर्वदा स्वाहारमन्वेषयति तथैव विद्यार्थिनाऽपि विद्याधिगमचेष्टा सर्वदा कार्या । यथा च बको ध्यानावस्थितो भवति तथैव विद्यार्थिनाऽपि पठनानन्तरं विद्य ऽध्येया । यथा च कुक्कुरः स्वल्पामेव निद्रामवलम्बते, तथैव विद्यार्थिना मनागेव निद्रोपास्या । अधिकाहारेण चाऽऽलस्यं स्वाभाविकमेव, अतो विद्यार्थिना स्वल्पाहार एव विधेयः । किञ्च ब्रह्मचर्यन्तु तेन सर्वदा सेव्यमेव । अन्यगुणापेक्षया ब्रह्मचर्यस्य महत्ता विद्यार्थिजीवने सर्वातिशायिनी वर्तत एव । 'ब्रह्मचर्येण तपसा देवा मृत्युमुपाघ्नत' इति वेदवाक्ये प्रशंसितं ब्रह्मचर्यन्तु विद्यार्थिभिः सदा समुपास्यमेव ।

'स्वस्थे शरीरे स्वस्थं मस्तिष्कं निवसति' इति सदुक्तेरनुसारं शरीरस्वास्थ्यमपि समपेक्ष्यत्येव । इमामेवावश्यकतां परिलक्ष्य विद्यालयेषु नानाविधानां व्यायामादि-क्रीडानां व्यवस्था वर्तते । विद्यार्थिनामिदं परमम् कर्तव्यम् यत्तैः समयोचितैः शरीरोचितैश्च व्यायामैः शरीरस्य सम्पुष्टिः करणीया । यतः केवलाध्ययने निरता ये छात्राः शरीरं प्रति समुपेक्षां विदधति, ये यावज्जीवनं दुर्बलकलेवरा न किमपि संसारे कर्तुं पारयन्ति । पठनकाले पठने, व्यायामकाले च व्यायामे दत्तावधाने-स्तैस्सर्वदा भाव्यम् । अनया रीत्या शरीरसम्पत्त्या विद्याविभूत्या च सम्पन्नाः नैतिकगुणपरिपूर्णाश्छात्रा आगामिजीवने सर्वविधेषु क्षेत्रेषु स्वसमुन्नतिं कुर्वन्तः स्वार्थेन सह परमार्थं साधयन्तः स्वमानवजन्म सफलयन्ति ।

—:०:—

## १४. कर्त्तव्यपालनम्

स्वेच्छया परकीयनियोगेन वा मयाऽविरोधमङ्गीकृतवता विधीयमानः कार्यभारो मे कर्त्तव्यम्, अस्यैव कर्त्तव्यस्य पालनमस्माकं सामाजिकानि, दैशिकानि, जातीयानि च वन्धनानि रचयति मनुष्याणां जीवनं कर्त्तव्यपरम्परयोपनिवद्धं भवति। आजन्मनो मरणपर्यन्तं मनुष्याः कर्त्तव्यपालन एव नियुज्यन्ते। तेषु कर्त्तव्येषु वहूनि परमात्मना समर्प्यन्ते, वहूनि चाऽस्माभिः स्वयमेवाधीयन्ते। एवञ्च कर्त्तव्यं प्रतिव्यक्ति भिद्यते।

कर्त्तव्यपालनमेव वस्तुतो मनुष्याणां मनुष्यत्वं महत्त्वं च सृजति, संसारे नानाविधा मनुष्याः सन्ति, परं सर्वे कर्त्तव्यपरायणा न भवन्ति। यः कर्त्तव्यं पालयति स एव समाजस्य रक्षक आदर्शभूतश्च मन्यते, सर्वेषामादरं चाधिकरोति। अत्र संसारे यस्यां जात्यां कर्त्तव्यनिष्ठा यावत्यां मात्रायां वर्तते, तया तावती समुन्नतिर्विहिता। कस्याऽपि समाजस्योन्नतिस्तावन्न भवति यावत्तदवयवभूता जनाः प्रत्येकं स्वं कर्त्तव्यं न चेतयन्ते, न पालयन्ति च।

कर्त्तव्यपालनाय मनसो दृढता परमापेक्षिता। जीवनसङ्ग्रामे नानाविधाः विघ्नवाधाः समुपस्थाय कर्त्तव्यपालनं प्रतिवध्नन्ति। तत्र कतिपये मनुष्या मुह्यन्ति, परं कर्मवीरास्तत्रापि स्वं कर्त्तव्यमनुस्मरन्ति, पालयन्ति च। यस्य हृदयं दृढं नास्ति, स लज्जया, घृणया, भीत्या च कर्त्तव्यपालनात् पृथक् संजायते, परं हृदये दृढतां सन्दधानास्तु कापि लौकिकी शक्तिः कर्त्तव्यपालनान्न च्यावयति। जाते हि कर्त्तव्यज्ञाने तदविरोधिभावाः स्वयमन्तर्धातुमारभन्ते। अस्यैव कर्त्तव्यपालनपरायणत्वस्य प्रभावेण प्रातःस्मरणीयनामा महामना राजा हरिश्चन्द्रो निजे नयनकनीनिकापेक्षया प्रियेऽपि पुत्रे रोहिताश्वे श्मशानस्थे स्वां महिषीमपि श्मशानकरमकम्पितस्वरमयाचत, परशुरामश्च पितुर्वचनं रक्ष्यं मन्यमानो जननीं रेणुकायाः परशुधारया गलमच्छिनत्, आधुनिकेऽपि युगे विद्यासागरेश्वरचन्द्रगान्धिमहात्मप्रभृतयस्तानि तानि कार्याणि कर्त्तव्यपालनपरायणतयैव व्यधिषत, यानि कर्तुं सर्वसाधारणः कम्पेते। केवलमस्माकं भारते किन्तु देशान्तरेऽपि कर्त्तव्यपालनस्य महानस्ति

समादरः । इङ्गलेण्डदेशे अस्मिन्नेव एव युगे गैस्काइनजजमहोदयो निजस्य राज्ञस्त-नयायैव कारावासदण्डमदात् ।

यः स्वं कर्तव्यं न पालयति, स स्वस्य परिवारस्य, समाजस्य, देहस्य च महतीं क्षतिं विधत्ते । मन्यतां यदि पिता स्वं कर्तव्यं स्वस्य सन्तानस्य शिक्षणं न करोति, तदा दुष्टासु वृत्तिषु व्यासक्तस्तदीयः पुत्रः किं ग्रामं नोपद्रवति, परिवारं न पीडयति, समाजं न क्लेशयति, न सङ्कोचयति वा निजया नीचवृत्त्या । राजा यदि प्रजानां रक्षायां उपायेषु न दत्तावधानो भवेदवश्यमसौ देशो विरज्येत, राज्ञोऽ-कर्त्तव्यनिष्ठत्वात् । एवमेव प्रजास्वपि राजनि विरज्यन्तीषु तासां क्षतिरेव भवति कर्त्तव्यराजभक्तिविमुखत्वात्तासामेवमेवाऽन्यत्राऽपि कल्पनीयम् ।

कर्त्तव्यपालनं जीवनस्य वास्तविकं महत्त्वस्थानम् । अस्माभिश्चाऽस्य महत्त्व-स्योपलब्धयेऽवश्यं प्रयत्नो विधेयः, यस्य देशस्य समाजस्य वा जनाः पृथक् पृथक् समूहे च कर्त्तव्यपालनं प्रति सतर्कास्तेषु देशेषु समाजेषु च लक्ष्मीः स्वं स्वाभाविकं चाञ्चल्यंदोषमपास्य निवसति । अतोऽस्माभिरपि कर्त्तव्यपालन-प्रवणैर्भाव्यम्, एवं हि सर्वविधोन्नतिभाजनं वयं स्याम, नान्यथेति ।

—:०:—

## १५. विद्यार्थिजीवनम्

### ( सन् १९६८, ६९ ई० )

शास्त्रेष्वस्माकं ऋषिभिर्मुनिभिश्च मनुष्यजीवनं चतुर्षु विभागेषु विभक्तमस्ति । तत्राऽऽश्रमचतुष्टयमस्ति, ब्रह्मचर्य-गृहस्थ-वानप्रस्थ-सन्यासभेदात् । एषु सर्वेषु ब्रह्मचर्यजीवनमत्युत्तमं वर्तते । ब्रह्मचर्यजीवनमेव विद्यार्थिजीवनमस्ति । अस्याम-वस्थायां नानाक्लेशसहनपूर्वकमनुशासनमुपकारभावनां, सहिष्णुतां, संस्कृतिं, विद्याश्च लभन्ते छात्राः । 'विद्यायाः अर्थी' विद्यार्थीति नियममनुसृत्य विद्यामन्तरेण न किमपि चिन्तयन्ति सच्छात्राः । ब्रह्मचर्यजीवने विद्यार्थी स्वेच्छयाऽध्ययनं करोति । न सर्वे ब्रह्मचर्यसेविनो विद्यार्थिनः किन्त्वध्ययनशीलाः बालका बालिकाश्चैव विद्यार्थिनः कथ्यन्ते । विद्यार्थिनः पुस्तकान्यादायाऽनुदिनमध्ययनार्थं विद्यालयं

गच्छन्ति । सच्छात्रोऽध्ययनमतिरिच्य भोजनवस्त्रादिकस्य कस्यचिदपि चिन्तां न करोति । यतस्ते स्वभावत एव प्राप्नुवन्ति तान् । कारणं चात्र—

'कुक्षौ तिष्ठति यस्यान्नं विद्याभ्यासेन जीर्यते ।
तारयेत्तस्य वंशानि दशपूर्वान्दशापरान् ।।'

पठनेन छात्राणां ज्ञानमेधतेऽतो विद्यार्थिनां कृते केवलं पठनस्यैव चिन्ता भवति । यतो ज्ञानादधिकं किमपि नास्त्यस्मिञ्जगति । विद्यार्थिजीवनं सर्वतोऽतीवोत्कृष्टतमं वर्ततेऽतस्सर्वैर्विद्वद्भिरस्य जीवनस्य महती प्रशंसा विहिता । यतो हि विद्यार्थी स्वचरित्रस्य निर्माणं करोत्यस्मिञ्जीवने । अपि च सः गुरुजनेभ्यश्शिक्षां गृह्णाति । अस्मिन् काले याः शिक्षास्तस्य हृदयपटले अङ्किताः भवन्ति, ताः कदापि न दूरीभवन्ति । यतो हि विद्यार्थिनः स्वीयाध्ययनकाले विद्याध्ययनपरायणाः नानाविधानि कष्टानि सहन्ते, अत एव 'छात्राणामध्ययनं तपः' इत्युच्यते । अध्ययनतपकाले सन्मार्गानुसरणमावश्यकमस्ति, न त्वसन्मार्गानुसरणमिति ।

छात्रस्य कृते विद्यया सहैव ब्रह्मचर्यधारणाऽतीवावश्यकी वर्तते । यतो विना छात्रजीवनमपूर्णमस्ति । प्राचीनकाले पञ्चविंशतिवर्षपर्यन्तं छात्राः ब्रह्मचारिणो भवन्ति स्म । ते ब्रह्मचर्यव्रतं पालयन्तो गुरुसमीप एव विद्याध्ययनं कुर्वन्ति स्म । गुरुकुलेऽधीयानश्छात्राः गुरुकृपया ज्ञानवन्तः प्रतिभाशालिनश्च भवन्ति स्म । अद्यतनं विद्यार्थिजीवनं नितान्तविपरीतमस्ति । तेषु न तु श्रद्धाऽस्ति न च भक्तिरस्ति ।

अद्यतनेषु छात्रेष्वनुशासनहीनतायाः विशेषतः प्राचुर्यमवलोक्यते । यद्यद्यतनश्छात्रः पूर्वछात्राणामनुकरणं कुर्यात्तर्हि पुनरेकदा जीवनमुन्नतिमयमेवमादर्शयुक्तं कर्तुं शक्नुयात् । गुरुभक्ताः श्रमशीलाश्च ये छात्रास्ते शीघ्रमुन्नतिपथमारोहन्ति ।

छात्रा एव भाविनो नागरिकाः भविष्यन्ति । अत एव संसारस्य समस्तेषु राष्ट्रेषु विद्यार्थिनामादरो भवति । निर्धनाः योग्याश्छात्राः धनिकेभ्यश्छात्रवृत्तिं प्राप्नुवन्ति । अहो ! विद्यार्थिजीवनं सर्वथाऽऽनन्दमयमतस्सर्वैश्छात्रैरत्यवधानतयाऽध्ययनं करणीयमिति ।

—:o:—

## १६. यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः

### ( सन् १९७८ ई० )

सर्वेषु ब्रह्मचर्यादिषु आश्रमेषु प्रधाने गृहस्थाश्रमे तु नार्याः प्राधान्यं वर्तत एव। नहि नारीं विना गृहस्थाश्रमो विराजते। तत्र प्रदीपमानो गृहस्वामिनीति पर्यायः स्वत एव तस्याः गौरवं व्यनक्ति। गृहस्थपदघटकं गृहमिति पदं न निवासस्थानस्य वाचकम्; अपि तु तद् गृहिणीमेव बोधयति। तथा चोक्तम्—

'न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते।'

यस्मिन् गृहे नारीणां कृते सुखस्योपलब्धिर्न भवति, तस्मिन् गृहे कल्याणं न भवति। तत्र निवसतां धर्मं कर्म कुर्वतां जनानां सर्वा एव क्रियाः निष्फला एव भवन्ति। यत्र च नार्यः प्रमुदिता वसन्ति, तत्र सर्वासामेव देवतानां निवासो भवति। अत एव सर्वैरेव देवरज्येष्ठादिभिः सम्बन्धिभिः नारीणां प्रसन्नता भूषण-भोजनादिभिः सम्यक् सम्पादनीयैवेति प्रकारेण भगवान् मनुरपि नारीणां निरतिशायि वर्णयति। तथा हि—

'यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः।
यत्रैतास्तु न पूज्यन्ते सर्वास्तत्राफलाः क्रियाः॥
पितृभिर्भ्रातृभिश्चैव पतिभिर्देवरैस्तथा।
पूज्या भूषयितव्याश्च बहुकल्याणमीप्सुभिः॥'

पुराणेषु तु नारीणां माहात्म्यं विविधाभिः कथाभिर्विविधैर्निदर्शनैश्च बहुशो वर्णितं वर्तते। तत्र देवीभागवतं मार्कण्डेयपुराणं ललितोपाख्यानं चेत्यादीनि ग्रन्थ-रत्नानि नारीगौरवस्य प्रदर्शनपराणि वर्तन्ते। धर्मनिष्ठा आस्तिकाः सज्जनाः एषां पाठपूजनादिकं प्रत्यहं विदधति। भारतीयसमाजे देवनाम्नः पूर्वं देवीनामग्रहणम्, यथा-लक्ष्मीनारायणः, सीतारामः, राधाकृष्णः, गौरीशंकर इत्यादिरूपेण यद् दृश्यते, तत्सर्वं स्पष्टत एव नारीमहत्त्वस्य प्रदर्शकमेव वर्तते। देवगणनावसरे सर्वप्रथमं 'मातृदेवो भव' इति वैदिकनिर्देशः पितुरपेक्षया मातुर्महिम्न आधिक्यं मातृशक्ते-र्महत्त्वमेव दर्शयति।

किम्बहुना, भगवती आद्याशक्तिः, जगज्जननी, मातेति विविधैः स्वरूपैर्विविधैर्नामभिः स्तूयमाना नारी भारतीयसंस्कृतौ भारतीयसाहित्ये च स्वकीयं वैशिष्ट्यं व्यनक्ति। शङ्कराचार्यादारभ्य विवेकानन्दप्रभृतिभिर्लोकोपकारकैर्महात्मभिः सैषा मातृशक्तिरेव संस्तुता सेविता च।

भारतीयायां संस्कृतौ यो नारीणां गरिमा दृश्यते, यच्च साहित्ये तासां महिमा वर्ण्यते, तस्य सर्वस्य कारणं नारीणां गुणग्राम एव वर्तते। वेदकाले बहवो वैदुष्यविशिष्टा नार्य आसन् वैदिकमन्त्राणां दर्शनकर्त्र्यः। उपनिषत्काले च गार्गी–मैत्रेयीप्रभृतयो ज्ञाननिधयो नार्य आसन्, यासां ज्ञानस्य गरिमा तत्कालीनैर्विद्वद्भिः याज्ञवल्क्यादिभिर्ब्रह्मविद्यापारङ्गतैर्महर्षिधुरीणैरपि स्वीकृतः। पुराणेषु परमसतीनां विदुषीणां पावनानि चरित्राणि श्रूयन्त एव।

शङ्कराचार्यकाले विश्वविश्रुतवैदुष्यस्य श्रीमण्डनमिश्रस्य धर्मपत्नी सकलशास्त्रविशारदा शारदा नारीणां महिमानं विद्योतते। तदनन्तरञ्च संस्कृतसाहित्ये विज्जकादीनां वैदुष्यविमण्डितानि सरसानि पद्यानि तासां कवित्वकलां कथयन्त्येव। हिन्दीसाहित्यं च मीराप्रभृतीनां भक्तिमयैः पद्यैः सुषमासंभृतं हरत्येव मानसम्। न केवलं साहित्यक्षेत्रे, परन्तु रणक्षेत्रेऽपि स्त्रीणां वैशिष्ट्यं विराजते। कैकेयीप्रभृतीनां पुरातनैश्चरित्रैः सह रानीदुर्गावती–महारानीलक्ष्मीबाईप्रभृतीनां वीरतावासितानि चरितानि गायन्त्येव जनाः।

किम्बहुना। सम्प्रत्यपि भारते सर्वानेव राजनीतिकुशलान् वयोवृद्धान् नेतॄन् परिभाव्य विशालस्य भारतवर्षस्य शासनधुरं वहन्ती शासनं सम्यक् सञ्चालयन्ती प्रधानमन्त्रिपदं समलङ्कुर्वन्ती महामहिमश्रीमतीइन्दिरागान्धिमहाभागा अपि स्त्रीणां राज्यसञ्चालनकौशलेन सह बुद्धिवैभवं साकारतया प्रदर्शयत्येव। एभिरेव स्त्रीणां निरवद्यैः समस्तलोकहृद्यैर्गुणगणैः प्रभावितैर्भारतीयकोविदैस्तासां सम्मानं वर्णितम्। अत एव नारीणां सम्मानं कल्याणप्रदम्, अवमाननञ्च सर्वथा विनाशकारकमिति सुस्पष्टं सिद्धम्।

—:o:—

## १७. विज्ञानस्य लाभाः दुष्परिणामाश्च
### ( सन् १९७९ ई० )

आवश्यकता आविष्काराणां जननी भवति। इदं युगं विज्ञानप्रधानं युगमस्तीत्यत्र नास्ति मनागपि सन्देहलेशः। वैज्ञानिकैराविष्कारैर्जगतो महानुपकारो जातः। वैज्ञानिकेन मानवेन लोकहितार्थं प्राकृतिकशक्तीनां वशीकरणे यत् साफल्यं प्राप्तं न तत् विस्मर्तुं शक्यते।

विज्ञानेन मानवजीवनं सुखमयं विधातुं भूयान् प्रयत्नो विहितः। प्राचीनकाले वाहनानि, अश्वरथः, गजाः, घोटकाश्चाऽऽसन्। श्रेष्ठिनो महाजना धनिकाश्च पुष्परथैः, शकटैः, शकटीभिश्च चलन्ति स्म। सामान्यजनास्तु पद्भ्यामेव जग्मुः। साम्प्रतं तु विज्ञानस्यैव महिमाऽस्ति यद् नानाविधान्यद्भुतयानानि वैज्ञानिकैर्निर्मितानि सन्ति। धूम्रयानेन स्थले वयं वेगेन गच्छामः। धूम्रयानेनास्माकं दूरयात्रायां जायमानमसौख्यमपि दूरीकृतम्। वयं पोतेन समुद्रांश्च तरामः, वायुयानेन च गगनमण्डलेऽपि स्वच्छन्दं विचरामः। परं विमानानां, समुद्रपोतानां, जलान्तर्गामिनीनां नौकानाञ्चाऽऽविष्कारेण युक्तं जगदिदं नितरां भीषणं जातम्।

वातानुकूलितभवनैर्वाहनैश्च मानवजीवनमतीव सुखावहं विहितम्। सम्प्रति त्वेतादृशानि भवनान्यपि निर्मीयन्ते येषु ग्रीष्मशीतवर्षाणां कश्चिदपि प्रभावो नाऽऽपतेत्। नायलोन–रेयन–रूबिया–टेरीकाट प्रभृतीनि वस्त्राण्यपि विज्ञानस्यैवोपायनानि ( GIFTS ) सन्ति।

विद्युतः पेट्रोलस्य च विभिन्नेभ्यः स्वरूपेभ्यो निर्मितानि वस्तूनि कस्तावद् विस्मर्तुं शक्नोति ? अस्माकमनेकासां लघ्वीनां विस्तृतानाञ्च समस्यानां समाधानमेतद्द्वारा सम्भवति। यन्त्रालयेषु विशालानि यन्त्राणि विद्युत्साहाय्येनैव प्रचलन्ति। विद्युदेव सम्प्रति विश्वम् स्वप्रकाशेनालोकयति। सत्यमुच्येत चेद् विज्ञानेनाऽद्य वरुणाग्निपवनाः सर्वेऽपि निगृहीताः। अद्य विज्ञानस्य सङ्केतमात्रेण विद्युद्व्यजनं प्रचलति, विद्युत्चुल्लिर्दहति। अमेरिकादेशे तु कृत्रिमाः मेघा अपि वर्षन्ति।

अद्य चित्रपटस्य समाजे यादृशः प्रभावो, न तादृशोऽस्त्यन्यस्य कस्याऽपि वस्तुनः। सम्प्रति चित्रपटस्य महान् प्रचारोऽस्ति। एवं किमपि नगरं नास्ति यत्र चित्रपटभवनं न भवेत्। अद्य मुद्रणयन्त्रप्रभावेणातिदुर्लभमपि ग्रन्थरत्नमल्पमूल्येन

लब्धुं शक्यते । समाचारपत्राण्यधुना गेहे गेहे पठ्यन्ते । समाचारपत्रेण संसारस्य महानुपकारो भवति । अनेनैव सर्वं स्थानं निकटे स्थितमिव वर्तते । 'रेडियो' इत्याख्येन ध्वनिप्रसारकयन्त्रेण पर्वतानां सागराणां गहनानां वनानाञ्च व्यवधानमविगणय्य जन उच्चारणसमकालमेव सहस्रक्रोशेभ्योऽपि वृत्तं गीतादिकं च शृणोति । 'दूरदर्शन' ( टेलीवीजन ) इति नाम्ना प्रसिद्धेन यन्त्रेण दविष्ठस्यापि जनस्याऽऽकृतिरपि दृष्टिपथमायाति । अहो ! विज्ञानस्य विस्मयावहो महिमा । कृषियन्त्राणामाविष्कारेणेह विज्ञानप्रधाने युगे उत्पादनकर्मणि महती प्रगतिर्दृश्यते । अधुना मानवः प्रत्येकं कार्यं विद्युच्छक्तिप्रयोगेण सरलतया सुष्ठुतया च सम्पादयितुमर्हति । दूरवीक्षणयन्त्राणामाविष्कारेण सूक्ष्मतमा अपि कीटाणवो द्रष्टुं शक्यन्ते । प्रचण्डेऽपि निदाघे ग्रीष्मभयमथवा कठिनेऽपि शीते शीतभयमिदानीं नाऽस्ति । वयमुभयोरपि कालयोर्विद्युद्व्यजनसाहाय्येन विद्युच्चुल्लिप्रयोगेण वा सुखपूर्वकं शेमहे । सर्वमेतदन्यच्च वा सुखं वैज्ञानिकानां महतः श्रमस्य परिणामोऽस्ति ।

सम्प्रति विज्ञानेन तु स्वयमेवात्मानं भगवद्रूपेणावस्थातुं निश्चयो विहितः । देवलोके तस्य राकेटयानानि निरन्तरं गच्छन्ति । मङ्गलग्रहे चन्द्रलोके च निवासस्य योजनाः निर्मीयन्ते । मृत्युविजयस्य प्रयासोऽपि विज्ञानेन विधीयते । नाऽस्ति किञ्चिदपि जीवनस्यैतादृशं क्षेत्रम् यत्र विज्ञानस्य प्रवेशो नाऽस्ति । विज्ञानेनाऽस्माकं दृष्टिकोण एव पूर्णतः परिवर्तितः ।

एकतस्तु विज्ञानेन वयमतिशयेन लाभान्विताः स्मः, अन्यतो विज्ञानस्याऽनेके दुष्परिणामा हानयश्चाऽप्यस्माकं दृष्टिपथमायान्ति । विज्ञानेन युद्धस्वरूपमेव सर्वथा परिवर्तितम् । विज्ञाननिर्मितैर्दुरूहैरस्त्रशस्त्रैस्तद्भयङ्करप्रहारशक्त्या कम्पितानि शब्दायमानानि च दिगन्तरालानि न केवलं मानवसमाजस्यापितु जीवनमात्रस्य सन्निकटं विनाशं सूचयन्ति । विज्ञानस्यैतावत्या प्रगत्या सर्वत्र मृत्युर्मूर्तिमती दृश्यते । परन्तु सम्यग्विचारणायां ज्ञायते यन्नैष दोषो विज्ञानस्य अपितु तादृशस्य मानवस्याऽस्ति यो दुर्भावनया विज्ञानं प्रयुङ्क्ते, भ्रातुर्भ्रात्रा वधं कारयितुं साधनानां संग्रहं कुरुते । अतो यदि मानवो विज्ञानस्योपयोगं सद्भावनया कुर्यात्तर्हि पृथ्वीयं स्वर्गभूमिरेव सम्पद्येत ।

—:o:—

## १८. सत्सङ्गतिः कथय किं न करोति पुंसाम्
### अथवा
## सत्सङ्गतिः
### ( सन् १९८२ ई० )

मनुष्यः स्वभावतो दुर्विचारान् विचारयति। दुष्कर्माणि करोति, दुश्चेष्टां च चेष्टते। अत एतदर्थमिदमावश्यकम्प्रतीयते यत् किमपि तादृशं साधनम्भवेत् येन मानवोऽधो न गच्छेत्, स्वोन्नत्यर्थमेव सदा प्रयतेत। साधनानि च निःसंशयं वहूनि सन्ति। यथा—पुस्तकानि, महतामुपदेशाश्च। पुस्तकेषु सद्विचाराः प्राप्यन्ते। उपदेशेष्वपि मानवोन्नतेरुपायाः भवन्ति। परन्तु ते केवलं ज्ञानरूपेण गृह्यमाणाः, हृदये न तिष्ठन्ति। एकेन कर्णेन श्रुत्वाऽपरस्मात् कर्णान्निर्गच्छन्ति। अत एवोन्नति-प्राप्त्यर्थं सर्वोत्तमं साधनं सत्सङ्गतिरेवाऽस्ति।

सतां सज्जनानां सङ्गतिः सत्सङ्गतिरुच्यते। सत्सङ्गतौ वयं सज्जनानां सद्विचारान् श्रृणुमः, तेषां सदाचरणानि, सत्कर्माणि च पश्यामोऽतो हृदयं दृढीभूय सत्कर्मण्येव प्रवर्तते। सज्जनानां सङ्गत्या मानवः सज्जनो, विनीतः, शिष्टश्च भवति। असज्जनानां च सङ्गत्या मानवो दुर्जनो भवति; तस्याऽधःपतनं च निश्चितमेव।

मानवो यादृशानां पुरुषाणां सङ्गतिं करोति तादृश एव भवति। मानवस्योपरि सङ्गतेर्महान् प्रभावो भवति। अतः स यादृशैर्जनैः सह वसति, उपविशति, खादति, पिवति च स तादृश एव भवति। अत एवोक्तम्—

'संसर्गजाः दोषगुणाः भवन्ति।'

वाल्यकाले विशेषतः वालकस्योपरि सङ्गतेः प्रभावः प्रवलतमो भवति। वालको यादृशैर्वालकैस्सह सङ्गतिं करिष्यति स तादृश एव भविष्यति। सत्सङ्गत्या मानव उन्नतिपदम्प्राप्नोति। सज्जनैस्सह मित्रत्वं कुर्वाणः कदापि नावसीदति। अत एवोच्यते—

'सद्भिरेव सहासीत सद्भिः कुर्वीत सङ्गतिम्।
सद्भिर्विवादं मैत्रीं च नासद्भिः किञ्चिदाचरेत्॥
पण्डितैः सह साङ्गत्यं पण्डितैः सह संकथाः।
पण्डितैः सह मित्रत्वं कुर्वाणो नावसीदति॥'

सत्सङ्गतिर्धियो जाड्यं हरति, वाचि सत्यं सिञ्चति, पापम् दूरीकरोति, कीर्तिं च दिक्षु तनोति। अत एव सत्सङ्गतिरेव जनानां सर्वकार्यसाधिकाऽस्ति। पुनश्च सतां सङ्गः कुमतिं दूरीकरोति, चेतो विमलीकरोति, चिरन्तनं पापञ्च चुलुकीकरोति। सज्जनानां सङ्गतिः किमु न मङ्गलमातनोति। सत्यमेवोक्तम्—

'जाड्यं धियो हरति सिञ्चति वाचि सत्यं
मानोन्नतिं दिशति पापमपाकरोति।
चेतः प्रसादयति दिक्षु तनोति कीर्तिं
सत्सङ्गतिः कथय किं न करोति पुंसाम्॥'

अपि च—

'दूरीकरोति कुमतिं विमलीकरोति
चेतश्चिरन्तनमघं चुलुकीकरोति।
भूतेषु किं च करुणां बहुलीकरोति
सङ्गः सतां किमु न मङ्गलमातनोति॥'

सत्सङ्गतिप्रभावेण दुष्टाः साधवो भवन्ति, मूर्खश्च प्रवीणतां याति। ऋषीणां सङ्गत्या व्याधो वाल्मीकिर्महान् ऋषिरभवत्। काञ्चनसंसर्गात् काचोऽपि मारकतीं द्युतिं धत्ते। पुष्पसंगत्या कीटोऽपि सतां शिर आरोहति। अत एवोच्यते—

'कीटोऽपि सुमनः सङ्गादारोहति सतां शिरः।
अश्मापि याति देवत्वं महद्भिः सुप्रतिष्ठितः॥'

दुर्जनसंसर्गेण मानवोऽसद्वृत्तः दुर्विचारवान् च भवति, तस्य बुद्धिर्दूषिता च भवति। दूषितबुद्धिर्मानवः दुर्व्यसनग्रस्तः क्षीणशरीरश्च भवति। तस्य यशो नश्यति। सर्वत्राऽनादरश्च भवति। अतो विद्यायशोबलसुखवृद्धये सत्सङ्गतिः कर्तव्या, दुर्जनसंसर्गश्च हेयः। अतः साध्वेवेदमुच्यते—

'पात्रं पवित्रयति नैव गुणान् क्षिणोति
स्नेहं न संहरति नापि मलं प्रसूते।
दोषावसानरुचिरश्चलतां न धत्ते
सत्सङ्गमः सुकृतसद्मनि कोऽपि दीपः॥'

अतो यदि कश्चिदुन्नतिः कामयते तह्यवश्यं तेन सत्सङ्गतिस्सेवनीया।

—:०:—

## १९. जननी जन्मभूमिश्च स्वर्गादपि गरीयसी

( सन् १९८२ ई० )

माता, मातृभूमिश्च द्वे एवैते सर्वोत्तमे स्तः। जनन्यां मृतायां सत्यां न काचिदपि निःस्वार्थं स्नेहमयी दृश्यते, तथा च स्वदेशादन्यत् न किमपि स्थानं सुखकरम्। महर्षिवाल्मीकिना रामायणे वर्णितम् यद्रामचन्द्रस्य लङ्काविजयानन्तरं यदा लङ्काराज्यस्य प्रस्ताव आगच्छत् तदा श्रीरामचन्द्रस्तमनङ्गीकुर्वन् लक्ष्मणं बभाषे, यत्—

'अपि स्वर्णमयी लङ्का न मे लक्ष्मण रोचते।
जननी जन्मभूमिश्च स्वर्गादपि गरीयसी॥'

मानवः कदाचिदपि मातुरनृणतां गन्तुं नार्हति। पुत्रस्य कृते माता निजं कष्टं नैव चिन्तयति। सा सदा तस्य सुखचिन्तामेव करोति। अतएव पुत्रस्यापि मातुरुपरि नैसर्गिकमसाधारणं च प्रेम वर्तते। माता बालकस्य कृते सर्वस्वमपि त्यक्तुं शक्नोति। अतएव जनैर्मातृपूजा अवश्यमेव करणीया।

अस्माकं जननी यथाऽस्मान् लालयति तथैवेयमस्माकं जन्मभूमिरप्यस्मान् पालयति। अस्या एव जलेन, वायुना, मृत्तिकया च वयं निरन्तरं परिपुष्टिं गच्छामः। अस्या एवाऽङ्के वयं स्वबालमित्रैः सह स्वच्छन्दं क्रीडामः। अतएव स्वदेशं प्रति अस्माकं हृदये सम्मान आदरश्च स्वाभाविक एव। यत्र कुत्रापि गतो मनुष्यो जन्मभूमिं सदा स्मरत्येव।

अस्माकं जन्मभूमिः भारतवर्षमस्ति। आसीत् पुरा भरतो नाम चक्रवर्ती राजा। तेन शासितो देशो "भारतवर्ष" इत्यभिधानं प्राप्तः। प्रधानतः हिमालयपर्वतोऽस्य देशस्य मुकुटोऽस्ति। रत्नाकरोऽस्य चरणौ प्रक्षालयति। भारतवर्षेऽस्मिन् पुराणमहाभारतादिरचयिता वेदव्यासः, रामायणप्रणेता महर्षिर्वाल्मीकिः, भक्तप्रवराः प्रह्लादध्रुवादयः, अशोकादयश्चक्रवर्त्तिनृपतयः, वराहमिहिरादयो ज्योतिर्विदः, धन्वन्तरि-सुश्रुत-जीवकादय आयुर्वेदज्ञाः, कणादादयो दार्शनिकाः, पाणिनि—कात्यायन—पतञ्जलिप्रभृतयो वैयाकरणाः, श्रीशङ्कराचार्य-रामानुजादयो वेदान्तशास्त्रकुशलाः, बुद्धदेव—महावीरादयो धर्मप्रवर्तकाः, माघ-भवभूति-कालि-

दासादयः कवयः, चाणक्यादयो राजनीतिज्ञाः, लीलावतीगार्गीप्रमुखानि स्त्रीरत्नानि इमं देशमलञ्चक्रुः ।

प्रकृतिदेव्या अनुगृहीतोऽस्माकं देशः । अत्र गङ्गा-यमुना-नर्मदा-कावेरी प्रभृतयो महानद्यः प्रवहन्ति । अस्माकं जन्मभूमिरियं द्राक्षा-दाडिम-जम्बू-आम्रादि-प्रचुरैः फलैस्सुफलाऽस्ति । वयम्भारतीयाः देवेभ्योऽपि श्रेष्ठाः, यतो देवा अपि अस्माकं जन्मभूमौ जन्मग्रहणाय स्पृहयन्ति । उक्तञ्च विष्णुपुराणे—

'गायन्ति देवाः किल गीतकानि धन्यास्तु ये भारतभूमिभागे ।
स्वर्गापवर्गास्पदमार्गभूते भवन्ति भूयः पुरुषाः सुरत्वात् ॥'

अस्माकं पराधीनतायाः मुख्यं कारणमासीदेकताया अभावः । अतोऽस्माभिर्यथाशक्ति कलहः परिहर्तव्यः । जन्मभूमेर्गौरववर्धनाय सर्वैश्चेष्टितव्यम् एतादृशदेशस्य गौरवाभिवृद्धये प्राणा अपि परित्याज्याः । वयं भारतमातरं नमामः ।

—:०:—

## २०. लोभः पापस्य कारणम्
### ( सन् १९८३ ई० )

अन्यदीयस्य धनस्य पदार्थान्तरस्य वा लाभाय यो मनसि मनुष्याणां दुरभिलाष उदयते स एव लोभः, अभिलाषमात्रं न लोभः, स्वेनोपार्जितस्य श्रद्धयाराधितात् देवद्विजादेर्वा प्रार्थ्यमानस्य वस्तुविशेषस्याभिलाषे लोभव्यवहाराभावात् । वस्तुतस्तु-अनुचितक्रमेण लब्धुमिच्छैव लोभः, अतएव तरुशिखरवर्त्तिपरिणतफललिप्सया तरुमारोहतो दैववशाज्जाते विनिपाते 'लोभेनात्मा व्यापादितः' इति व्यवह्रियते ।

लोभे एतावती मोहिनी शक्तिस्तिष्ठति यदनेनावृते चेतसि सत्प्रवृत्तयो न स्थितिमुपयान्ति । योऽद्य स्वचरित्रगौरवेण सम्मानमासाद्य कुलस्य, समाजस्य, अभिजनस्य च मुखमुज्ज्वलतामनैषीत्, स एव श्वो लोभवशंवदः सन्, किमपि चौर्यादि कुकर्म कृत्वा व्रीडावनतशिराः सन् कुत्रापि कोणे स्वं मुखं गोपयति ।

अयं हि लोभः साधुमसाधुं ज्ञानिनमज्ञानिनं च कठिनस्वान्तं करोति, न्यायान्यायविवेकं भ्रंशयति, मनुष्यस्य मनुष्यतां च नाशयति । लोभोपहतचेतनो हि

जनोऽकार्यमपि कार्यं मन्यते, क्षुद्रेभ्योऽपि वस्तुभ्यः सत्यभाषणाय जलाञ्जलिं वितरति, निन्दां संहते, नरहत्यासदृशेऽपि कुत्सिते घोरे च कर्मणि प्रवर्त्तते। लोभेन कदर्थितस्य कर्तव्यज्ञानं तथा विपद्यते यथाऽसौ दरिद्राणां मुखात् केवलं बलादादत्ते, सतीनां सतीत्वं नाशयति, प्रियां पत्नीं च पत्या वियोजयति।

लोभिनो लोभस्य यावत्यधिकमात्रा प्रवृत्तिरपि तदनुसारेणैव घृणिता, शतमर्थयमानो निभृतमनाश्रितप्राणघातचेष्टश्च चौर्यमाचरति, सहस्रमीप्सुश्च साहसेन चौर्ये प्रवर्तते, लक्षं लिप्सुर्दलबद्धां दस्युतामाश्रयति, (औरङ्गजेबवत्) साम्राज्यमधिजिगमिषुश्च भ्रातॄन् मारयति, पितरं च क्लेशयति। लोभिनो हि जनाः स्वनिन्दां सहमानाः परकीयसम्पदपहरणप्रवृत्ता धृतास्सन्तो नानाविधां यातनां भुञ्जते, लोभेनाधिकं भुञ्जाना नानाविधै रोगैश्चुलुकितस्वास्थ्या अकाल एव कालकवलिता भवन्ति।

यो हि जनो वस्तुतो मनुष्यजीवनं यापयितुमिच्छेत् तेन मनुष्योचितं इन्द्रियसंयमः सेवनीयो, लोभश्च दमनीयः। लोभे त्यज्यमाने मनुष्यस्याऽऽत्मा बलवद्भावं भजति। केनाऽपि विश्वस्य भवति न्यस्यमानं निधिं यदि समये भवान् परावर्त्तयति तदा भवदीयं गौरवं न हीयते, अथ लोभमहिम्ना तदन्यथा पन्था आश्रीयते तथा कृते पतित आत्मा लज्जापयोनिधौ। एवं करणे सति लोकानां घृणापूर्णस्य दृक्पातस्य पात्रत्वमुपैष्यति भवान्। मानुष्यकं भवन्तं हित्वा पलायेत, पशुत्वं च भवति स्वं पदं विदधीत। अयमपि नियमो नास्ति यद् यो लोभी नास्ति स सदा दरिद्र एव तिष्ठतीति। दानिनो निर्लोभाश्चापि पुरुषाः धनिनः कीर्तिभाजश्च दृश्यन्ते। अतो लोभमाश्रित्य वृथा कीर्त्तिलाभस्वरूपयाग्यतां विपादयन्ति लोभोपासकाः।

अतः स्वामार्थिकीं मानसिकीं चोन्नतिं कामयमानैरारम्भत एव लोभत्यागाय यतनीयम्, आदित एवाऽत्र विषये विधीयमानोऽभ्यास एव परिणामे महता वेगेन सम्भवन्तं लोभकृतमभिभवं निरोद्धुमीष्टे। आवश्यकश्च लोभस्य त्यागः, तस्य परिणामे विपदावहत्वदर्शनात्, क्षीरे पतन्तीनां मक्षिकाणां, कर्कटधृतगलस्य बकस्य च दृष्टान्तमत्रोपस्थापयन्ति पण्डिताः। अमुमेवार्थसारमत्र निधायाहुः 'लोभः पापस्य कारणम्' इति।

—:०:—

# २१. आचारः परमो धर्मः
## अथवा
## शीलम्
## अथवा
## सदाचारोपदेशः

( सन् १९६१, ७०, ८३ ई० )

सतां सज्जनानामाचारः सदाचारः कथ्यते । सदाचारयुक्तो जनः स्वकीयानीन्द्रियाणि वशीकृत्य सर्वैः सह शिष्टतापूर्वकमाचरति । सः सत्यं वदति, मातापितरावुत्थाय नित्यमेवाभिवादयति, गुरुजनानामादरं करोति, नित्यमग्निं परिचरति, परोपकारं करोति, सत्कर्मणि प्रवृत्तो भवति, असत्यकर्मभ्यश्च निवृत्तो भवति । मानवः तद्वदाचरणेन सदाचारी, धार्मिकः, शिष्टो, विनीतो, बुद्धिमांश्च भवति ।

सदाचारयुक्तो जनः सर्वत्र आदरं लभते । समस्तगुणयुक्तोऽपि सदाचाररहितो जनः समाजे आदरं न लभते । सदाचारेण बुद्धिर्वर्धते, कीर्तिर्दिक्षु प्रसरति, दुर्गुणोऽपि दूरीभवति, कुविचाराणां प्रादुर्भावो न भवति, हृदये सद्भावो जागर्ति, आयुश्च वर्धते । सदाचारेणैव जनाः ब्रह्मचारिणो भवन्ति । सदाचारः मानवमुच्चपदे स्थापयति । सदाचारयुक्तस्य जनस्य पापकर्मणि प्रवृत्तिर्न जायते, अत एव तस्य बुद्धिर्निर्दोषा भवति । निर्दोषबुद्धिश्च लोकस्य शुभचिन्तने प्रवृत्तो भवति । अत एव पूर्वैर्महर्षिभिः 'आचारः परमो धर्मः' इत्यङ्गीकृतः । सदाचारी विश्वस्य प्रतिष्ठा, सदाचारे सर्वं प्रतिष्ठितम् । तस्मात् सदाचारं परमं वदन्ति । अत एव जनैः सदा स्ववृत्तस्य रक्षा कार्या । सदाचारेण हीनो जनः पतितः पशुतुल्यश्चास्ति । उक्तञ्च—

'वृत्तं यत्नेन संरक्षेद् वित्तमेति याति च ।
प्रक्षीणो वित्ततः क्षीणो वृत्ततस्तु हतो हतः ॥'

सदाचारस्य महिमानं कोऽपि वर्णयितुं न शक्नोति। समस्तधर्मग्रन्थेषु सदाचारस्य महिमा विभिन्नप्रकारैर्वर्णितोऽस्ति। महाभारतेऽप्युक्तम्—

'आचाराल्लभते ह्यायुराचाराल्लभते श्रियम्।
आचारात् कीर्तिमाप्नोति पुरुषः प्रेत्य चेह च॥
आचारलक्षणो धर्मः सन्तश्चारित्रलक्षणाः।
साधूनाञ्च यथावृत्तमेतदाचारलक्षणम्॥'

ब्रह्मचर्यस्य वेदेऽपि महिमा वर्णितोऽस्ति यद् ब्रह्मचर्यस्य सदाचारस्य वा महिम्ना देवा मृत्युमपि स्ववशेऽकुर्वन्। अत एवोक्तम्—

'ऐश्वर्यस्य विभूषणं सुजनता शौर्यस्य वाक्संयमो
ज्ञानस्योपशमः श्रुतस्य विनयो वित्तस्य पात्रे व्ययः।
अक्रोधस्तपसः क्षमा प्रभवितुर्धर्मस्य निर्व्याजता
सर्वेषां खलु सर्वकारणमिदं शीलं परं भूषणम्॥'

अपि च—

'ब्रह्मचर्येण तपसा देवा मृत्युमपाघ्नत'

मनुष्यस्तदा सच्चरित्रो भवति यदा स मातृवत् परदारेषु व्यवहरति, कन्याः बालिकाश्च स्वभगिनीवत् पश्यति, परद्रव्याणि लोष्ठवत् पश्यति। कामवासनां निगृह्य संयत इवाचरति। यो नैवमाचरति स दुश्चरित्रः दुराचारीति कथ्यते। दुराचारी नास्तिकः, निष्क्रियः, अधर्मज्ञश्च भवति।

सदाचारेणैव लोकस्योन्नतिर्भवति। सदाचारपालनेनैव श्रीरामचन्द्रो मर्यादा-पुरुषोत्तमोऽभवत्। एतदर्थमेव लक्ष्मणेन शूर्पणखाया नासिका छिन्ना। सदाचार-पालनेनैव हरिश्चन्द्रः, दधीचिः, गान्धिमहोदयश्च यशःशरीरेणाद्यापि जीवन्ति। सदाचाराभावेनैव चतुर्वेदविदपि रावणो राक्षस इति कथ्यते। साध्वेवेदमुच्यते—

'आचारहीनं न पुनन्ति वेदाः' इति।

अतस्सर्वैः स्वोन्नत्यै सर्वदा सदाचारः पालनीयः।

—:०:—

## २२. परोपकाराय सतां विभूतयः
## अथवा परोपकारः

(सन् १९६८, ७०, ८३ ई०)

किमपि प्रत्यर्पणमनभिलष्य परकीयहितानुसन्धानं परोपकारः। मनुष्येषु श्रेष्ठतायाः साधनानि यान्यपेक्षितानि तेषु प्राधान्यं परोपकारस्य। येषु मनुष्येषु गुणोऽयं नास्ति तान् मनुष्यतनुमाधाय चरतः पशूनेवाभिधातुं युज्यते।

केचित् परोपकारिणो भवन्ति, केचिच्च स्वार्थिनः। परोपकारिणो जनाः परोपकारेणैव प्रसन्नाः भवन्ति। परोपकारेणैव कायो विभाति। सत्यमेवोक्तम्—

'श्रोत्रं श्रुतेनैव न कुण्डलेन दानेन पाणिर्न तु कङ्कणेन।
विभाति कायः करुणापराणां परोपकारैर्न तु चन्दनेन॥'

न केवलं मानवेष्वेव परोपकारभावना वर्तते, अपि तु देवेषु पशुपक्षिवृक्षादिष्वपि वर्तते। प्रकृतिः परोपकारस्यैव शिक्षां ददाति। नद्यः स्वयमेव जलं न पिबन्ति, वृक्षाश्च स्वयमेव फलानि न खादन्ति। किन्तु तासां जलं, तेषां फलानि च परोपकाराय। उक्तञ्च—

'पिबन्ति नद्यः स्वयमेव नाम्भः स्वयं न खादन्ति फलानि वृक्षाः।
धाराधरो वर्षति नात्महेतोः परोपकाराय सतां विभूतयः॥'
'भवन्ति नम्रास्तरव फलोद्गमैर्नवाम्बुभिर्दूरविलम्बिनो घनाः।
अनुद्धताः सत्पुरुषाः समृद्धिभिः स्वभाव एवैष परोपकारिणाम्॥'

परोपकाराय शरीरं प्रयच्छतः एतच्छरीरं श्लाघ्यम्। स्वोदरम्भराः केवलं पशवो जीवन्ति। यः परार्थे जीवति तस्यैव जीवितं श्लाघ्यम्। तथा हि—

'पशवोऽपि हि जीवन्ति केवलं स्वोदरम्भराः।
तस्यैव जीवित श्लाघ्यं यः परार्थे स जीवति॥'

परोपकारात् प्रबलं किमपि पुण्यमत्र जगति नाऽस्ति। एष मानवानां हृदये पवित्रतां, सहनशीलतां, दयां, भक्ति, प्रमाणं च प्रादुर्भावयति। एतान् हि गुणान् विना शुनो मार्जारान् वा किमिति हसेम वयम्, तेऽपि तु खादन्ति, शेरते, जाग्रति च।

बुभुक्षितेभ्यो भोजनस्य, पिपासितेभ्यः पयसः, वस्त्रहीनेभ्यो वस्त्रस्य दानम्। येषां प्राणाः सङ्कटे सन्ति, तेषां प्राणत्राणम्। जीवमात्रं प्रति तदाशापूरकसहयोग-प्रदानं चोपकारिणां प्रधानं करणीयम्। किञ्च विद्यादानमपि परोपकारस्य श्रेष्ठो मार्गः। दत्तं भोजनं वस्त्रं च कियतः कालस्यकृते तदावश्यकतां शमयति, परं विद्या मनुजानां जीवनसहचरी सती तान् सुखयति।

यदि वयं धनिकेभ्यो धनं दद्मो न तेन तेषां किमपि फलं जायते, समुद्रे वर्षण-मिव तदनतिप्रयोजनकतां प्रतिपद्यते। एवमेव यः स्वबाह्वोः श्रमेण भोजनमर्जयितुं क्षमस्तस्मै भोजनप्रदानं परोपकारस्य कोटौ नायाति, प्रत्युत तथाविधानामलसानां सङ्ख्यां वर्द्धयेत्। अत उपकाराय प्रवर्त्तमानैः प्रथममिदं विचारणीयम् यत् कस्मै किमर्प्यताम्? कस्य वस्तुनः कस्मै आवश्यकता? अक्षिणी निमील्य कस्मैचित् कस्यचिद्वस्तुनः प्रदानं परोपकारस्य संज्ञां नार्हति। अत एवोपकारकाले पात्रविवेकः परमापेक्षितः पदार्थः। ये सबलस्वस्थतनवस्ते जीवनयात्रायास्साधने तादृशे वर्त्मनि योजनीयाः ये यत्र साफल्यमासाद्य सुखिनो जायेरन्। शास्त्रेषु परोपकारस्य महती प्रशंसा विहिताऽस्ति। तथा चोक्तम्—

> 'अष्टादशपुराणेषु व्यासस्य वचनद्वयम्।
> परोपकारः पुण्याय पापाय परपीडनम्॥'

परोपकारे न केवलं परेषामेव लाभः किन्त्वानन्दोऽपि सञ्जायते। परोपका-रिण अन्तःकरणे सन्तोषो जायते। परोपकारेण जनः सर्वाः सम्पदः प्राप्नोति। सत्यमेवोक्तम्—

> 'परोपकारव्यापारः पुरुषो यः प्रजायते।
> सम्पदं स समाप्नोति परत्राऽपि परं पदम्॥'

दिवंगतोऽपि परोपकारी यशः शरीरेण सदैव जीवति। परोपकारभावनयैव नरपतिः शिविः परार्थं स्वमांसमपि छित्त्वा ददौ। दधीचिः परेषां प्राणान् परित्रातुं स्वमस्थि समर्पितवान्। रन्तिदेवः क्षुधार्त्तोऽपि स्वभोजनं चाण्डालाय समर्पित-वान्। दिलीपः परोपकारभावनयैव स्वशरीरं सिंहाय समर्पितवान्। एतादृशाना-मेव महात्मनां यशः श्रद्धया गायति त्रिलोकी। तथा चोक्तम्—

'परोपकरणं येषां जागर्त्ति हृदये सताम् ।
नश्यन्ति विपदस्तेषां सम्पदस्तु पदे पदे ॥'

अत एवेत्थं परोपकारस्य सर्वाङ्गीणं स्वरूपं मङ्गलमयमवगत्य सर्वैर्जनैरवश्यं परोपकारो विधेयः । उक्तञ्च—

'धनानि जीवितं चैव परार्थे प्राज्ञ उत्सृजेत् ।
सन्निमित्ते वरं त्यागो विनाशे नियते सति ।
परोपकारः कर्तव्यः प्राणैरपि धनैरपि ।
परोपकरणं पुण्यं न स्यात् क्रतुशतैरपि ॥
वदनं प्रसादसदनं सदयं हृदयं सुधामुचां वाचः ।
करणं परोपकारकरणं येषां केषां न ते वन्द्याः ॥'

—:०:—

## २३. समाचारपत्राणि

### ( सन् १९६७ ई० )

यानि लघूनि बृहदाकाराणि वा पुस्तकानि नियततिथिषु भिन्न-भिन्नस्थानानां समाचारान् सङ्कलय्य सम्पाद्य च मुद्रितानि कृत्वा विक्रीयन्ते तानि समाचारपत्राणि कथ्यन्ते । एषु केवलं समाचारा एव न भवन्ति, किन्तु मानसिक-चारित्रिक-व्यावहारिक-समुत्कर्षसम्पादका विचारा अपि प्रकाश्यन्ते । एषु कतिचित् साप्ताहिकानि भवन्ति, कतिचिदर्धसाप्ताहिकानि भवन्ति, दैनिकानि च । विदेशेषु त्वर्धदैनिकानि पत्राण्यपि प्रकाश्यन्ते । मासिकत्रैमासिक-षाण्मासिकवार्षिकपत्राणां तु पुस्तकतया परिणमनमेव समुचितं तेषु समाचारस्यानादरणीयतयोल्लेखात्प्रबन्धप्रकाशनस्यैव तेषामुद्देश्यत्वाच्च ।

एषां समाचारपत्राणां न कश्चिदेको नियतो लेखकः, परन्तु भिन्न-भिन्नपुरुषैर्लिख्यमानानां लेखानां पद्यानाञ्च सम्पादनाय कश्चिदेकः प्रधानसम्पादकस्तिष्ठति, यो रीतिं नीतिं च नियमयति । स एव च तत्र प्रकाश्यमानानामर्थानामुत्तरदायी स्वीक्रियते ।

सर्वप्रथमं समाचारपत्रं वेनिस (इटली) नगरे प्रकाशमासादयत् । तदुद्भवां-ल्लाभान् दृष्ट्वा यूरोपस्य सर्वे देशाः समाचारपत्राणां प्रकाशनमारब्धवन्तः महाराज्ञ्या एलिजावेथनाम्न्याः शासनकाले इङ्गलैण्डदे- सर्वप्रथमस्य समाचार-पत्रस्य प्रकाशनं प्रारभ्यत । अस्माकं देशे भारते तु १७४० तमे ईशवीये वर्षे 'इण्डिया गजेट' नामकस्य पत्रस्य प्रकाशनं प्रावर्त्तत । सम्प्रति त्वेतेषां पत्राणां संख्या सहस्रमप्यतिशेते । परमियमपि संख्या देशान्तरीयपत्रसङ्ख्यया तुलनायां लघुतमैव ।

सर्वेषामपि समाचारपत्राणां कर्त्तव्यतया निर्धारयितुमुद्देश्यं भिन्नं भिन्नं भवति । किमपि राज्ञो जनतायाश्च वृत्तमन्योन्यस्य समीपे समुपस्थापयति येन तदीयं पारस्परिकं मालिन्यमपयाति । किञ्चिच्च पत्रं सदा जागरूकं सद् राष्ट्रस्य राजनीतिकीं गतिं नियन्त्रयति । किञ्चन च धार्मिकीं स्थितिं समेधयति । एवमन्यत् । सम्प्रति प्रायः प्रचलितेयं परिपाटी यद् या संस्था स्वीयं प्रचुरं प्रचारमिच्छति तस्याः मुखपत्रं प्रचरत्येव, येन तदीयमभिमतं जनानां पुर उपस्थाप्यते । समाचारपत्रे शासकाः नियम्यन्ते, लोकतन्त्रपद्धतौ शासनसूत्रञ्च समालोच्यते । एकत्राऽऽविष्कृतस्य कस्यापि पदार्थस्य यन्त्रस्य वा प्रचारः समाचारपत्रैरेव क्रियते । येन तन्मूल्यं वर्द्धते, तदाविष्कर्तुश्च प्रतिष्ठा समेधते । देशविदेशभवानतिप्रयोजनीयान् वृत्तान्तान् ज्ञातुमपि पन्थाः सरलतया पत्राण्येव ।

समाचारपत्राणां कर्तव्येषु दृष्टिं ददतां कृते तदुपयोगिता न दुरूहा । एतैर्हि लोकरुचिः प्रकाश्यते शासनं च सरलतां नीयते । दुष्पथप्रवृत्तं शासकमण्डलमङ्कुशे-नेवाकृष्य प्रकृतौ स्थापयितुमेषां महानुपयोगः । तत्र स्थितौ सम्पादका दण्डमपि लभन्ते । परं तु सम्पादकैः सदा निर्भीकैः सत्यव्यवहारिभिर्विघ्नबाधासहिष्णु-स्वभावैश्च भाव्यम् । एवं सत्येव पत्रस्य गौरवं भवति ।

भारतीयानि बहूनि पत्राणि कस्यचिदेकस्य प्रधानपुरुषस्य समुत्साहमेवाधारं कृत्वा प्रकाशमासादयन्ति, तेन तदीयोत्साहसमाप्तौ तदायुरपि समाप्नोति । पाश्चात्यदेशेषु नेदृशी स्थितिः । तत्र ग्राहकाणां संख्याऽत्यधिका भवति, येनार्थिक-कष्टं नोपतिष्ठतेऽतोऽन्येऽन्ये प्रकाशकप्रबन्धकाः सदा समुद्यता एव तिष्ठन्ति ।

—:०:—

## २४. उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीः

### अथवा

### नास्त्युद्यमसमो बन्धुः

### अथवा

### उद्योगः

जगत्यस्मिन् सर्वे जनाः सुखमभिलषन्ति किन्तु विरला एव सुखं प्राप्नुवन्ति, न सर्वे। एवञ्चाभिलाषे सत्यपि यं विना सुखं न प्राप्यते स कः पदार्थः? इति जाते प्रश्ने 'उद्योगः' इत्युत्तरं बोध्यम्। आलस्यमेव जनस्य शत्रुरस्ति येन जनोऽनिष्टं प्राप्नोति। नरस्य मित्रम् 'उद्यमो' वर्तते, येन सः दुःखसागरं तरति। तथा चोक्तम्—

'आलस्यं हि मनुष्याणां शरीरस्थो महान् रिपुः।
नास्त्युद्यमसमो बन्धुर्यं कृत्वा नावसीदति॥'

उद्योगो हि नाम स्वभिलषितार्थप्राप्तये दृढेन सङ्कल्पेन बाधामगणितां कृत्वा प्रवृत्तिः, अयमेव चोद्योगः सेवमानः कष्टपरम्परां न गणयति, 'क्लेशः फलेन हि पुनर्नवतां विधत्ते' इति ध्यायन् प्रवर्त्तते सोत्सवं तत्र, तथा हि कोऽपि वाणिज्यव्यवसायी देशाद् देशान्तरं पर्यटन यात्रायां नानाविधानि कष्टानि भुङ्क्ते, कृषीवलश्च मृत्स्नां म्रदयति, वपति, स्वहृदयरुधिरकणैरिव पृषतैः पयसां सिञ्चति, विद्यार्थी च कश्चिज्ज्ञानसम्पादनाय निशं दिवा करोति दिनं च व्यर्थं न कुरुते, सर्वापि चेतादृशी चेष्टोद्योग इति श्रेणीमाश्रयति।

पुरुषार्थेन जनाः सुखमधिगच्छन्ति। उद्यमेनैव निर्धना धनिनो भवन्ति। सर्वमुद्योगेनैव सिध्यति। उद्योगबलेनैव पाण्डवा नष्टमपि राज्यमुपलब्धवन्तः। कालिदासः उद्योगमाश्रित्य कविकुलगुरुर्बभूव। लोकमान्यतिलक-गोखले-महात्मा-गान्धिप्रभृतिभिर्देशभक्तैः पुरुषार्थेनैव वैदेशिकपारतन्त्र्यादियं मातृभूमिर्विमुक्ता विहिता। कार्याण्युद्यमेनैव सिध्यन्ति। लक्ष्मी उद्योगिनं पुरुषमुपैति। तदुक्तम्—

'उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीः
दैवेन देयमिति कापुरुषाः वदन्ति ।
दैवं निहत्य कुरु पौरुषमात्मशक्त्या
यत्ने कृते यदि न सिध्यति कोऽत्र दोषः ॥'

ऐहलौकिके, पारलौकिके, आधिभौतिके, आधिदैविके, आध्यात्मिके वा कुत्रापि कर्मणि विनोद्योगं साफल्यं न सम्भवति । यथा सुप्तस्य सिंहस्य मुखे मृगाः न प्रविशन्ति, तथैव मनोरथैरेव कार्याणि न सिध्यन्ति । ईश्वरोऽप्युद्योगिनः साहाय्यं करोति तथा चोक्तम्—

'उद्यमेन हि सिध्यन्ति कार्याणि न मनोरथैः ।
न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः ॥
उद्यमः साहसं धैर्यं बुद्धिः शक्तिः पराक्रमः ।
षडेते यत्र वर्तन्ते तत्र देवः सहायकृत् ॥'

भाग्यवादिनः कथयन्ति यत् सर्वत्र भाग्यं फलति, परन्त्वनुद्यमेन ते दुःखमेव प्राप्नुवन्ति । ते न जानन्ति यद् यथैकेन चक्रेण रथस्य गतिर्न भवेत्, तथैवोद्यमेन विना दैवं न सिध्येत् । अस्माकमधीनं पौरुषम्, फलं तु दैवाधीनम् । अत एव फलाशां परित्यज्य कर्माणि कर्तव्यानि । तथा चोपदिष्टम्भगवता श्रीकृष्णेन—

'कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।
मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि ॥
कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ।
जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ॥'

अतः सर्वास्वप्यवस्थासु यथाबलमुद्योगः करणीयः, तेन हि मनसि बलमायाति, चिन्ताया अवसरो नोपतिष्ठते, सिद्धौ जातायां नैतिकी तां मन्यमानस्य द्वेषो नोदयते, स्वस्य च तुष्टिरुद्भवति ।

—:o:—

## २५. मम प्रियपुस्तकम् श्रीमद्भगवद्गीता
## ( सन् १९७९ ई० )

मम प्रियपुस्तकमस्ति श्रीमद्भगवद्गीता। गीतोपदेमिनं कौरवपाण्डवमध्ये सम्पद्यमानयुद्धस्यारम्भकाले मानसिकसंघर्षसंलग्नस्यार्जुनस्य प्रतिबोधाय स्वयं भगवान् श्रीकृष्णचन्द्रश्चकार, तथा च विशालबुद्धिः श्रीकृष्णद्वैपायनव्यासो लोक-मङ्गलाय महाभारतस्य भीष्मपर्वणि गीतोपदेशमिमग्रथयत्। गीतायां सर्वेषां शास्त्राणामुपसंहारोऽस्ति तथा चेयं गीता मनुष्यमात्रं पुरुषार्थप्रतिबोधं कारयित्वा शाश्वतशान्तिप्रदायिकाऽस्ति। निष्कामे कर्मणि प्रवर्त्तक एतादृशो विश्वविश्रुतो ग्रन्थो विश्वस्याऽस्य कस्याश्चिदपि भाषायां नाऽस्ति।

संसारे वसन् मनुष्यः कथं व्यवहरेत्, कीदृशं वा कर्म कुर्यात् इत्ययं विषयः प्रवृत्तिमार्गे विवेचितः, तथा च सांसारिककर्माणि परित्यज्य ज्ञाने निमग्नत्वं, केवलं ब्रह्मज्ञानावाप्तिर्वा निवृत्तिमार्गेऽस्ति। अत्रेदं तत्त्वम्—प्रवृत्तिमार्गिणः सामाजिक-कर्त्तव्यान्यावश्यकानि मन्यन्ते, निवृत्तिमार्गिणश्च वैराग्यं समर्थयन्ति। गीताया-मेतयोरुभयोरपि मार्गयोस्समन्वयोऽस्ति। ब्रह्मज्ञानं भक्तिश्च सम्मेल्य तद्द्वारा कर्मयोगसमर्थनमेव श्रीमद्भगवद्गीताया मुख्यः प्रतिपाद्यविषयोऽस्ति।

गीतायाः प्रारम्भिकेषु पञ्चस्वध्यायेषु स्वधर्मस्य कर्मणो वा आवश्यकतायाः निरूपणं विहितम्। षष्ठेऽध्याये इन्द्रियनिग्रहार्थं योगस्य साधनानामुल्लेखोऽस्ति। सममेव तत्रेदमपि विवेचितमस्ति यद् विषयवासनाविनाशार्थं परमात्मसम्बन्धिज्ञान-मावश्यकमिति। गीता तथ्यमिदं पूर्णतया स्वीकरोति यत्, परमेश्वरज्ञानमति-रिच्याऽन्येन केनचिदुपायेन मोक्षावाप्तिर्न सम्भाव्यते, ज्ञानमेतच्चावाप्तुं भक्तिरस्ति सुगमं साधनम्। भक्त्या ज्ञानेऽवाप्ते सति यः कर्मणो विमुखो न भवति अर्थाद् यः कर्मणः स्वधर्मस्य वाऽनुष्ठानं करोति, सः 'कर्मनिष्ठ' इति वक्तुं युज्यते। एवम् गीताया अवशिष्टेषु द्वादशस्वध्यायेषु भक्तिज्ञानयोर्विवेचनं कर्मयोगसाधनार्थं विहितमस्ति।

मनुष्यैः कर्म निरन्तरं कर्त्तव्यम्। कर्म मोक्षस्य बाधकं न भवति। सन्यासेन वैराग्येण वा यन्मोक्षं प्राप्यते तदेव कर्मयोगेनाऽपि लभ्यते। कस्याऽपि देहधारिणो

मानवस्य कृते कर्मणां त्यागोऽसम्भवः। प्रकृत्या तेन कर्माऽवश्यमेव कार्यते। प्रकृत्यैव सर्वं प्रचलति। तथा चोक्तम् गीतायाम्—

'न कर्म्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते।
न च सन्यसनादेव सिद्धिं समधिगच्छति॥
न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत्।
कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः॥'

एवम् यदा कर्माणि कर्त्तव्यान्येव, न कश्चित्तेभ्यो विमुखो भवितुमर्हतीति सुनिश्चितम्, तदा बुद्धिं समां स्थिरां च कृत्वा कर्त्तव्यकर्मणां करणमेव श्रेयस्करं भवति। मनुष्यस्याधिकारः केवलं कर्मकरणे एव, कर्मफलस्याऽवाप्तिरनवाप्तिर्वा तस्य वशे नाऽस्ति। अतः फलाशां परित्यज्यैव मनुष्यः कर्म कुर्यात्। तथा चोक्तम् गीतायाम्—

'कर्मण्येवाधिकारस्ते मा फलेषु कदाचन।
मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि॥
योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनञ्जय।
सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते॥'

ईश्वरं फलदातारं मत्त्वा, फलाऽफले समो भूत्वा वा यदा केवलं कर्त्तव्यबुद्ध्या किञ्चित् कर्म क्रियते तन्निष्कामबुद्ध्या विहितं कर्मोच्यते। उक्तञ्च—

'यस्त्वन्द्रियाणि मनसा नियम्यारभतेऽर्जुन।
कर्म्मेन्द्रियैः कर्मयोगमसक्तः स विशिष्यते॥'

निष्कामे कर्मणि प्रवर्त्तनपूर्वकमियं गीतेदमपि निर्दिशति यज्ज्ञानी मनुष्यः स्वकर्त्तव्यकर्माणि कुर्वन् स्वेनाऽऽचरणेन लोकमप्युन्नतिमार्गे प्रवर्त्तयति। इदमेव 'लोकसंग्रह' इत्युच्यते। यावत्कालं मनुष्यः समाजे प्रतिष्ठितः स्थास्यति तावत्कालं तेन लोकसंग्रहोऽपि करणीयो भविष्यति। उक्तञ्च गीतायाम्—

'कर्म्मणैव हि संसिद्धिमास्थिता जनकादयः।
लोकसंग्रहमेवाऽपि संपश्यन् कर्तुमर्हसि॥'

एवं गीता मानवमात्रस्य कृते सुगमं हितकरं च सन्देशं ददाति। सा ज्ञानमूलकं भक्तिप्रधानञ्च कर्मयोगं शिक्षयित्वा जीवनस्य समस्यानां समाधानस्य तथा च

स्वातन्त्र्यस्य मोक्षस्य वा निष्कण्टकं मार्गं निर्धारयति । गीतोक्तं मार्गमाश्रित्य जनोऽद्वितीयमानन्दं पूर्णत्वञ्चोपलब्धुं शक्यते ।

वेदोपनिषद्भागवतधर्मसांख्ययोगादिसिद्धान्तानां सारं संगृह्याऽद्वैतस्य सुधावर्षणतत्परेयं गीताऽस्मान् 'वसुधैव कुटुम्बकम्' इत्यध्यापयति । गीताशास्त्रमिदमज्ञानवशाद् दुःखभोगिनामुद्धारकम्, आत्मनि श्रेष्ठत्वभावमुद्बुध्य मानवतारक्षकं पुस्तकमस्ति । वैष्णवीयतन्त्रसारस्याऽधोलिखितोऽयं श्लोको गीतायास्तदेवौपयोगित्वम्प्रकाशयति—

'संसारं सागरं घोरं तर्तुमिच्छति यो नरः ।
गीतानावं समासाद्य पारं यातु सुखेन सः ॥'

एवं गीताऽस्ति मम प्रियपुस्तकम्, यतो हि गीताया उपदेशा न सङ्कीर्णाः किन्तु व्यापकाः, न सामयिकाः, किन्तु शाश्वताः सार्वकालिकाः वा, न केवलं व्यष्ट्युत्थानकारका, अपितु ते लोकमङ्गलविधायकास्सन्ति ।

—:०:—

## १४. मम प्रियतमो महाकविः कालिदासः

( सन् १९६९, ७० ई० )

श्रीकालिदासकविवर्यसरस्वतीयं
किं वर्णयाम्यतितरां रसवाहिनीति ।
यत् कालिकाभगवतीशुचिभावयोगाद्
यस्यामहो मुहुरनुग्रहमादधाति ॥

अस्माकं संस्कृतवाङ्मये कविताकामिनीविलासस्य कविकुलगुरोर्महाकवेः कालिदासस्य स्थानमत्युन्नतं दृश्यते । अस्य कवित्वशक्तिः प्रतिभा चाऽत्युच्चकोटेर्वर्तते । अत एव प्रसन्नराघवकर्त्रा जयदेवेन—

'यस्याश्चोरश्चिकुरनिकुरः कर्णपूरो मयूरो
भासो हासः कविकुलगुरुः कालिदासो विलासः ।'

इति सत्यमेवोक्तम् । तदनुवर्तिभिः कविभिर्विभिन्नप्रकारेण कालिदासकाव्यानामनुकरणमवश्यमेव विहितमित्यनुमीयते ।

महाकविकालिदासस्य समयविषये विद्वत्सु मतवैपरीत्यं दृश्यते । तथाप्ययं विक्रमादित्यराजस्य सभापण्डित आसीदिति सर्वेऽपि समामनन्ति । भारतवर्षस्य प्राचीनेतिहासेन ज्ञायते यत् ई० १००० पर्यन्तं विक्रमादित्यनामानः षड् राजानोऽभवन्निति । परन्तु ६३४ ईशवीयस्य एल्होलशिलालेखे कालिदासभारव्योर्नामिनी विद्येते । तद्यथा—

'येनायोजि न वेश्म स्थिरमर्थविधौ विवेकिना जिनवेश्म ।
स जयताम् रविकीर्तिः कविताश्रितकालिदासभारवीकीर्तिः ॥'

अतः ६३४ ईशवीयवर्षात् पूर्ववर्तिनां त्रयाणां विक्रमादित्यानामेवाऽयं सभापण्डितो भवितुमर्हति । तदनुसारेण तत्समयविषये त्रीणि मतानि प्रचलितानि—

१. विदुषा फर्ग्यूसनमहोदयेन कालिदासग्रन्थेषु विस्तृतं हूणजातिपराजयवर्णनं दृष्ट्वोक्तम् यद् ५४४ तमे ईशवीये वर्षे उज्जयिन्याः विक्रमादित्येन कारुरयुद्धे हूणाः पराजिताः । अतोऽस्यैव सभापण्डित आसीत् कालिदासः ।
२. स्मिथ-मैकडॉनलप्रभृतयो वैदेशिका इतिहासविदो विद्वांसो मन्दसूरस्य ४७२ तमस्येशवीयवर्षस्य वत्सभट्टिनिर्मिते शिलालेखे कालिदासकाव्यानुकरणं दृष्ट्वा कालिदासं चतुर्थेशवीयशतकस्य द्वितीयचन्द्रगुप्तविक्रमादित्यसमकालिकं स्वीकुर्वन्ति ।
३. शिवरामपराँजपे-के० बी० शंकरप्रभृतयो भारतीया विद्वांसः कालिदासस्य समयः ईशवीयपूर्वप्रथमशतकमिति स्वीकुर्वन्ति ।

प्राच्यराजकीयेतिहासेन ज्ञायते यद् उरगपुरम्, पाण्ड्यराज्यस्य राजधानी, यस्या वर्णनमतिविस्तरेण कालिदासेन विहितम्, प्रथमेशवीयशतकानन्तरं राजधानी नाऽऽसीदिति । कालिदासो गुप्तराज्ञां समकालिक इति स्वीकारे तस्य पाण्ड्यराज्ञामुत्कृष्टं वर्णनमसङ्गतम्भवतीति कृत्वा कालिदासः प्रथमेशवीयशतकीय इति मतमेव स्वीक्रियतेऽस्माभिः ।

संस्कृतसाहित्ये कालिदासनामानोऽनेके विद्वांसोऽभवन् । स्वरचितायां सूक्तिमुक्तावल्यां राजशेखरेणाऽप्युक्तम्—

'एकोऽपि जीयते हन्त ! कालिदासो न केनचित् ।
शृङ्गारे ललितोद्गारे कालिदासत्रयी किमु ।।'

महाकविकालिदासेन कुमारसम्भवम्, रघुवंशमेते द्वे महाकाव्ये, ऋतुसंहारः, मेघदूतञ्चैते द्वे खण्डकाव्ये, मालविकाग्निमित्रम्, विक्रमोर्वशीयम्, अभिज्ञानशाकुन्तलञ्चैतानि त्रीणि नाटकानि च प्रणीतानि ।

केचिद् विद्वांसः श्रुतबोधस्य कर्ता कालिदास इति कथयन्ति । परन्त्वस्मिन् विषये मतभेदोऽस्ति । घटकर्परकाव्यं तथा शृङ्गारतिलककाव्यमेतौ कालिदासविरचितग्रन्थाविति विदुषाम्मतं पूर्वमासीत्, किन्तु तन्निरस्तम् ।

कालिदासस्य कविताऽत्युच्चकोटेर्वर्तते । उपमालङ्कारविषये कालिदास एव सर्वश्रेष्ठो वर्तते । उक्तञ्च—'उपमा कालिदासस्ये'ति । जयदेवकविः कालिदासं 'कविताकामिनीविलास' इत्युक्तवान् ।

कालिदासः स्वकाव्येषु वैदर्भीरीतेरुपयोगं कृतवान् । तदुक्तम्—

'वैदर्भीरीतिसन्दर्भे कालिदासो विशिष्यते ।'

कालिदासस्य प्रधानगुणौ माधुर्यप्रसादौ । व्यञ्जनाव्यापारप्राधान्यादेतानि काव्यानि ध्वनिकाव्येषु परिगण्यन्ते ।

कालिदासेनाऽनुष्टुब्मन्दाक्रान्ताशार्दूलविक्रीडितवियोगिनीशिखरिणी–वसन्ततिलकेत्यादीनां सर्वेषामपि प्रधानच्छन्दसां प्रयोगो विहितः । क्षेमेन्द्रः स्वसुवृत्ततिलके कालिदासस्य मन्दाक्रान्तावृत्तं प्रशंसयति । तद्यथा—

'सुवशा कालिदासस्य मन्दाक्रान्ता प्रवल्गती'ति ।

दण्डिना अवन्तिसुन्दरिकथायां भूमिकायाः १५ तमे श्लोके कालिदासवाणी प्रशंसिता । तद्यथा—

'लिप्ता मधुद्रवेणाऽऽसन् यस्य निर्विषया गिरः ।
तेनेदं वर्त्म वैदर्भं कालिदासेन शोधितम् ।।'

कालिदासप्रशंसायां श्रीमल्लिनाथेनोक्तम्—

'कालिदासगिरां सारं कालिदासः सरस्वती ।
चतुर्मुखोऽथवा साक्षाद् विदुर्नान्ये तु मादृशाः ।।'

## प्रश्नपत्रम्

## १९७७

# उत्तरमध्यमपरीक्षायाम्

## द्वितीयवर्षे

## अनिवार्यसंस्कृतकाव्यविषये प्रथमपत्रम् ।

## व्युत्पत्तिनिबन्धानुवादनाटकेषु प्रश्नाः ।

संसूचनम्—कस्यापि प्रश्नस्य समेषामप्यंशानामुत्तरपुस्तिकायामेकत्रैवोत्तरलेखनमावश्यकम् ।

१. एतेषु द्वयोः प्रयोगयोरपाणिनीयत्वं विनिर्दिश्यताम्—

(क) ओदनं पयः भुङ्क्ते । (ख) मनसा हरये व्रजति ।

(ग) भूमौ अधितिष्ठति ।

२. स्वेच्छया द्वयोरशुद्धिसंशोधनं सहेतुकं प्रतिपाद्यताम्—

(क) तिलैः प्रतियच्छति माषान् । (ख) शत्रौ बिभेति ।

(ग) ग्रामाद् दक्षिणतः । (घ) वातस्य कपिला विद्युत् ।

३. एषु कोऽपि विषयः संस्कृतेन निबध्यताम्—

(क) भासनाटकचक्रम् । (ख) माघे सन्ति त्रयो गुणाः ।

(ग) स्त्रीशिक्षाया आवश्यकतोपयोगिता च । (घ) सहसा विदधीत न क्रियाम् ।

(ङ) भारतीया संस्कृतिः ।

४. निर्दिष्टोऽयं सन्दर्भः सुरगिराऽनूद्यताम्—

राजा तारापीड की उज्जैन नामक राजधानी थी । वह समस्त त्रिभुवन की तिलकरूपी थी । वह गहरी खाई से घिरी हुई थी, सफेदी पुते हुए परकोटे से परिवेष्टित थी, बड़ी-बड़ी बाजारकी सड़कों से शोभित थी, चौराहों पर बने हुए देव मन्दिरोंसे अलंकृत थी, वेद-ध्वनियों से निष्पाप थी, असंख्य तालाबोंसे

युक्त थी। वहाँ पर लोग वीर, विनयी, सत्यवादी, सुन्दर, धर्मतत्पर, महा-पराक्रमी, समस्त ज्ञानविज्ञानवेत्ता, दानी, चतुर, मधुरभाषी, प्रसन्नमुख, स्वच्छ वेषधारी, सभी भाषाओं के ज्ञाता, सभी लिपियों के वेत्ता, शान्त और सरलहृदय थे। उस नगरी में मणिद्वीपों में ही अनिर्वाण था, चकवा-चकवी के जोड़े में ही वियोग होता था, सोने की ही वर्णपरीक्षा होती थी, ध्वजाओं में ही अस्थिरता थी, कुमुदों में ही मित्रद्वेष ( सूर्यद्वेष ) था, अन्यत्र नहीं।

### अथवा

धर्म के बिना अर्थ और काम की उत्पत्ति ही नहीं हो पाती। इसलिए कहा जा सकता है कि धर्म, काम और अर्थ की अपेक्षा नहीं करता। यह धर्म ही मोक्षसुख की उत्पत्ति का मूल कारण है और चित्त की एकाग्रतामात्र से यह सिद्ध हो जाता है। धर्म, अर्थ और काम की तरह वाह्य साधनों के अधीन नहीं रहता। तत्त्वज्ञान से उत्कर्ष को प्राप्त धर्म किसी भी प्रकार से अनुष्ठित अर्थ और काम से बाधित नहीं होता। यदि अर्थ और काम से बाधित भी हो जाए तो थोड़े से प्रयत्न से ठीक होकर उस दोष को नष्ट करके महान् कल्याण का साधन बन जाता है। धर्म से पवित्र मन में रजोगुण का समावेश उसी प्रकार नहीं होता जैसे आकाश में धूल नहीं रुकती। अतः मेरा विश्वास है कि अर्थ और काम धर्म की सौवीं कला को भी नहीं पहुँच सकते।

५. अधस्तनेषु त्रीण्येव पद्यानि सवैशिष्ट्यं संस्कृतव्याख्यया स्फुटीक्रियन्ताम्—

(क) अनाहारे तुल्यः प्रततरुदितक्षामवदनः
शरीरे संस्कारं नृपतिसमदुःखं परिवहन्।
दिवा वा रात्रौ वा परिचरति यत्नैर्नरपतिं
नृपः प्राणान् सद्यस्त्यजति यदि तस्याप्युपरमः॥

(ख) श्लाघ्यामवन्तिनृपतेः सदृशीं तनूजां
कालक्रमेण पुनरागतदारभारः।
लावाणके हुतवहेन हृताङ्गयष्टिं
तां पद्मिनीं हिमहतामिव चिन्तयामि॥

(ग) तीर्थोदकानि समिधः कुसुमानि दर्भान्
स्वैरं वनादुपनयन्तु तपोधनानि ।
धर्मप्रिया नृपसुता न हि धर्मपीडा-
मिच्छेत् तपस्विषु कुलव्रतमेतदस्याः ॥

(घ) सम्बन्धिराज्यमिदमेत्य महान् प्रहर्षः
स्मृत्वा पुनर्नृपसुतानिधनं विषादः ।
किं नाम देव! भवता न कृतं यदि स्याद्,
राज्यं परैरपहृतं कुशलं च देव्याः ॥

६. भासविषयककालसमस्या विचार्यताम् ।

अथवा

एतेषु किमपि चतुष्टयं परिचयात्मकटिप्पणीभिर्निरूप्यताम्—
सूत्रधारः, स्थापना, नेपथ्यम्, कञ्चुकी, विदूषकः ।

## उत्तराणि

१. (क) 'ओदनं पयसा भुङ्क्ते' इति वाक्यम् साधु, 'साधकतमं करणम्' इत्यनेन पाणिनीयसूत्रेण 'पयस्' शब्दस्य करणसंज्ञकत्वात् 'पयस्' शब्दात् तृतीयाविभक्तिः ।

(ख) अत्र 'गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि' इति पाणिनीय-सूत्रेण विकल्पेन द्वितीया चतुर्थी च विभक्ती भवतः । अतः 'मनसा हरिं व्रजति', 'मनसा हरये व्रजति' इत्युभयमपि साधु ।

(ग) अपाणिनीयोऽयं प्रयोगः । 'अधिशीङ्स्थासां कर्म' इति पाणिनीयसूत्रा-नुसारेण अधिपूर्वकस्थाधातोः प्रयोगे आधारः कर्म संज्ञकः, कर्मणि च द्वितीया विभक्तिर्भवति; अतः 'भूमिम् अधितिष्ठति' इत्येव प्रयोगः पाणिनीयो वक्तुं शक्यते ।

२. (क) अत्र 'विलेभ्यः प्रतियच्छति माषान् अस्मै' इति शुद्धं वाक्यं भवितु-

मर्हति । अत्र 'प्रतिनिधिप्रतिदाने च यस्मात्' इति पाणिनीयसूत्रेण तिलशब्दात् पञ्चमी विभक्तिर्जाता ।

(ख) अत्र 'शत्रुभ्यो बिभेति' इति वाक्यं शुद्धं भवितुमर्हति । अत्र 'अपादाने पञ्चमी' इति पाणिनीयसूत्रेण शत्रुशब्दात् अपादानकारके पञ्चमी विभक्ति-र्जाता । 'भीत्रार्थानां भयहेतुः' इति पाणिनीयसूत्रेण भयहेतुत्वात् शत्रुशब्दोऽपादानसंज्ञकः, तस्मात् ततः पञ्चमीविभक्तिः ।

(ग) अत्र 'ग्रामस्य दक्षिणतः' इति वाक्यं शुद्धम् । अत्र 'षष्ठ्यतसर्थप्रत्ययेन' इति पाणिनीयसूत्रेण अतसुच् प्रत्ययान्तस्य 'दक्षिणतः' शब्दस्य योगे 'ग्राम' शब्दात् षष्ठीविभक्तिः ।

(घ) अत्र 'वाताय कपिला विद्युत्' इति वाक्यं शुद्धम् । अत्र 'उत्पातेन ज्ञाप्यमाने चतुर्थी वक्तव्या' इति वार्तिकेन वात शब्दात् चतुर्थीविभक्तिः ।

३. (क) द्रष्टव्यम् पृ० १०६–१०९ । (ख) द्रष्टव्यम् पृ० १०९–१११ ।
(ग) द्रष्टव्यम् पृ० ११८–१२० । (घ) द्रष्टव्यम् पृ० १२०–१२१ ।
(ङ) द्रष्टव्यम् पृ० १०१–१०२ ।

४. राज्ञः तारापीडस्य उज्जयिनी नाम्नी राजधानी आसीत् । सा सकलत्रिभुवन-तिलकस्वरूपिणी आसीत् । सा गभीरखातेन परिवृता, सौधप्राकारेण परिवे-ष्टिता, बृहतीभिरापणवीथिभिश्शोभिता, चतुष्पथेषु विनिर्मितैर्देवमन्दिरैः समलङ्कृता, वेदध्वनिभिर्निष्पापा, अनन्ततडागैश्च युक्ता आसीत् । तत्रत्याः लोकाः वीराः, विनयसम्पन्नाः, सत्यवादिनः, मनोहराः, धर्मतत्पराः, महापराक्रमिणः, सकलज्ञानविज्ञानविदः, दानशीलाः, बुद्धिमन्तः, मधुर-भाषिणः, प्रसन्नवदनाः, स्वच्छवेषधारिणः, सर्वभाषाविदः, सर्वलिपिविदः, शान्ताः, सरलहृदयाश्चाऽऽसन् । तस्यां नगर्यां मणिद्वीपेष्वेवाऽनिर्वाणमासीत्, चक्रवाकचक्रवाकवधूयुगल एव वियोगो भवति स्म, स्वर्णस्यैव वर्णपरीक्षा भवति स्म, पताकास्वेवाऽस्थिरता आसीत्, कुमुदेष्वेव मित्रद्वेषः (सूर्यद्वेष) आसीत्, नान्यत्र ।

## अथवा

धर्मं विना अर्थकामोत्पत्तिरेव न भवितुमर्हति। अत एवेदं वक्तुं शक्यते यद् धर्मः कामार्थौ नापेक्षते। अयं धर्म एव मोक्षसुखस्योत्पत्तेर्मूलं कारणमस्ति, चित्तस्यैकाग्र्यमात्रेण च सिद्ध्यति। अर्थकामाविव धर्मो न बाह्यसाधनान्याश्रयति। तत्त्वज्ञानादुत्कर्षं प्राप्तो धर्मः केनचिदपि प्रकारेणाऽनुष्ठिताभ्यामर्थकामाभ्यां न बाध्यते। यद्यर्थकामाभ्यां स बाध्येताऽपि, तर्हीषत्प्रयत्नेनाऽबाधितः सन् तं दोषं विनाशयित्वा महतः कल्याणस्य साधकः सम्पद्यते। धर्मेण पूते मनसि रजोगुणस्य समावेशस्तथैव न जायते यथा आकाशे धूलयो न स्थीयन्ते। अतो मम विश्वासोऽस्ति यदर्थकामौ धर्मस्य शततमां कलामपि न समीकर्तुमर्हतः।

५. (क) द्रष्टव्यम्, पृ० ३३–३४। (ख) द्रष्टव्यम्, पृ० ४५–४६।
(ग) द्रष्टव्यम्, पृ० २४–२५। (घ) द्रष्टव्यम्, पृ० ६५–६६।

६. भासविषयककालसमस्या—द्रष्टव्यम्, पृ० १–२।

## अथवा

सूत्रधारः—द्रष्टव्यम्, पृ० ७।

स्थापना—द्रष्टव्यम्, पृ० ६।

नेपथ्यम्—द्रष्टव्यम्, पृ० ७।

कञ्चुकी—द्रष्टव्यम्, पृ० ७।

विदूषकः—द्रष्टव्यम्, पृ० ७–८।

—:o:—

## प्रश्नपत्रम्
## १९७८
# उत्तरमध्यमपरीक्षायाम्
## अनिवार्यसंस्कृतकाव्यविषये
### द्वितीयवर्षे प्रथमपत्रम्
### [ व्युत्पत्तिनिबन्धानुवादनाटकेषु प्रश्नाः ]

१. एतेषु पञ्च वाक्यानि शोधनीयानि—

(क) हरिश्शेरते । (ख) अद्य गुरुः पाठमपाठयत् ।
(ग) गोपालः संतिष्ठति गोकुलं । (घ) सत्त्वरं नौमि कृष्णाय ।
(ङ) सखये कृष्णाय नमः । (च) सत्यं वदति निःशङ्कमहं ।

२. अधस्तनेषु विषयेषु कमप्येकविषयमवलम्ब्य शुद्धसंस्कृतगिरा निबन्धो लेख्यः—

(क) वाराणसी । (ख) विद्या ददाति विनयम् ।
(ग) छात्रकर्त्तव्यम् । (घ) यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः ।

३. अधोलिखितयोर्द्वयोर्हिन्दीवाक्यकदम्बकयोरेकं संस्कृतगिराऽनूद्यताम्—

( क ) भारतवर्ष की समुन्नति के लिए महिलाओं को शिक्षित करना परमावश्यक है। उनके शिक्षित रहने से घर के बालक-बालिकाएँ स्वत: शिक्षित होने लगते हैं। बाल्यावस्था में जो संस्कार प्राप्त होते हैं, वे सुगमता से विकसित हो पाते हैं। अच्छे संस्कार प्राप्त करनेवाला बालक जीवन में सफलता की ओर त्वरित गति से अग्रसर होता है। वीर और सुसंस्कृत माताओं के बालक इतिहास में बड़े यशस्वी सिद्ध हुए हैं। संस्कार भी यदि संस्कृतनिष्ठ हों तो हम जितनी उन्नत अवस्था में देश को देखना चाहते हैं, उसे देख पाएँगे।

( ख ) गुरु-शिष्य परम्परा से प्राप्त विद्या फलवती होती है। विश्व के समस्त उच्चतम विद्वानों ने अपने गुरुजनों का सादर उल्लेख किया

है। प्राचीनकाल में जब लेख-विज्ञान का आविष्कार नहीं हुआ था, तब योगबल से गुरुजन शिष्यों को विद्या दान देते थे। आज के मुद्रणबहुलता युग में पुस्तकों के द्वारा जिज्ञासुजन विविध विद्याओं को ग्रहण कर सन्तुष्ट हो जाते हैं। पर उससे चमत्कृति प्राप्त नहीं होती है। संस्कृत विद्या का इतिहास मौखिक परम्परा का इतिहास माना जाता है।

४. (क) परिहरतु भवान् नृपापवादं न परुषमाश्रमवासिषु प्रयोज्यम्।
नगरपरिभवान् विमोक्तुमेते वनमभिगम्य मनस्विनो वसन्ति॥

(ख) ऋज्वायतां च विरलां च नतोन्नतां च
सप्तर्षिवंशकुटिलां च निवर्तनेषु।
निर्मुच्यमानभुजगोदरनिर्मलस्य
सीमामिवाम्बरतलस्य विभज्यमानाम्॥

(ग) ऋज्वायतां हि मुखतोरणलोलमालां
भ्रष्टां क्षितौ तदवगच्छसि मूर्ख! सर्पम्।
मन्दानिलेन निशि या परिवर्तमाना
किञ्चित् करोति भुजगस्य विचेष्टितानि॥

(घ) कः कं शक्तो रक्षितुं मृत्युकाले
रज्जुच्छेदे के घटं धारयन्ति।
एवं लोकस्तुल्यधर्मो वनानां
काले काले छिद्यते रुह्यते च॥

ऊर्ध्वाङ्कितेषु त्रयः श्लोकाः सुस्पष्टं व्याख्येयाः।

५. अधोलिखितेषु द्वयोर्विषये टिप्पणी लेख्ये।

(क) नायकः, (ख) नान्दी, (ग) विष्कम्भकः, (घ) स्थापकः।

**अथवा**

स्वप्नवासवदत्तनाटककर्त्तुरितिवृत्तं लिखत।

## उत्तराणि

१. (क) हरिश्शेते । (ख) अद्य गुरुः छात्रमपाठयत् ।
(ग) गोपालः सन्तिष्ठति गोकुलम् । (घ) सत्वरं नौमि कृष्णम् ।
(ङ) सख्ये कृष्णाय-नमः । (च) सत्यं वदति निःशङ्कमहम् ।

२. (क) द्रष्टव्यम् पृ० १११–११२ । (ख) द्रष्टव्यम् पृ० ११५–११६ ।
(ग) द्रष्टव्यम् पृ० १२१–१२३ । (घ) द्रष्टव्यम् पृ० १२७–१२८ ।

३. (क) भारतवर्षस्य समुन्नत्यै महिलानां शिक्षणं परमावश्यकम् । तासु शिक्षितासु सतीषु गृहस्य बालकाः बालिकाश्च स्वत एव शिक्षिताः भवितुमारभन्ते । बाल्यावस्थाया ये संस्काराः लभ्यन्ते, ते सुगमतया विकसितुमर्हन्ति । उत्तमसंस्कारान् लभमानो बालको जीवने त्वरितगत्या साफल्यमग्रे सरति । वीराणां सुसंस्कृतानाञ्च मातॄणां बालका इतिहासे महान्तो यशस्विनस्सिद्धाः । संस्कारा अपि संस्कृतनिष्ठा भवेयुश्चेद् वयं यावत्यामुन्नतिदशायां देशं द्रष्टुं वाञ्छामः, तथा द्रष्टुं शक्ष्यामः ।

(ख) गुरुशिष्यपरम्परया प्राप्ता विद्या फलवती भवति । विश्वस्य सर्वैरप्युच्यत विद्वद्भिः स्वगुरुजनानां सादरमुल्लेखो विहितः । प्राचीनकाले यदा लेखनविज्ञानस्याऽऽविष्कारो न सञ्जात आसीत्, तदा योगबलेन गुरुजनाः शिष्येभ्यो विद्यादानं कुर्वन्ति स्म । अद्य मुद्रणबाहुल्ययुगे पुस्तकद्वारा जिज्ञासवो विविधाः विद्याः गृहीत्वा सन्तुष्टाः भवन्ति । परन्तु तेन चमत्कृतिर्न प्राप्यते । संस्कृतविद्यायाः इतिहासः श्रुतिपरम्पराया इतिहासो मन्यते ।

४. (क) द्रष्टव्यम्, पृ० २३ । (ख) द्रष्टव्यम्, पृ० ३७ ।
(ग) द्रष्टव्यम्, पृ० ४९ । (घ) द्रष्टव्यम्, पृ० ७० ।

५. (क) नायकः—'त्यागी कृती कुलीनः सुश्रीको रूपयौवनोत्साही । दक्षोऽनुरक्तलोकस्तेजो वैदग्ध्यशीलवान्नेता'; दक्षः क्षिप्रकारी, शीलम् सद्वृत्तम्, इत्येवमादिगुणसम्पन्नो नेता नायको भवति । नायकश्चतुर्विधो भवति—धीरोदात्त, धीरोद्धत, धीरललित, धीरप्रशान्तभेदात् ।

(ख) नान्दी—द्रष्टव्यम्, पृ० ५–६।

(ग) विष्कम्भकः—द्रष्टव्यम्, पृ० ६।

(घ) स्थापकः—सूत्रधारसदृश एव स्थापकः। तदुक्तम्—

'पूर्वरङ्गं विधायैव सूत्रधारो निवर्तते।
प्रविश्य स्थापकस्तद्वत् काव्यमास्थापयेत्ततः॥
दिव्यमर्त्ये स तद्रूपो मिश्रमन्यतरस्तयोः।
सूचयेद्वस्तु बीजं वा मुखं पात्रमथापि वा॥'

स्थापककार्यम्—

'रङ्गं प्रसाद्य मधुरैः श्लोकैः काव्यार्थसूचकैः।
रूपकस्य कवेराख्यां गोत्राद्यपि स कीर्तयेत्॥
ऋतुञ्च कञ्चित् प्रायेण भारतीं वृत्तिमाश्रितः॥'

अथवा

स्वप्नवासवदत्तनाटककर्त्तुरितिवृत्तम्

द्रष्टव्यम् पृ० १–५।

—:०:—

प्रश्नपत्रम्

१९७९

## उत्तरमध्यमपरीक्षायाम्

अनिवार्यसंस्कृतकाव्यविषये

द्वितीयवर्षे प्रथमपत्रम्

[ नाटकनिबन्धव्युत्पत्त्यनुवादेषु प्रश्नाः ]

१. अधोलिखितेषु कानिचित् त्रीणि पद्यानि व्याख्येयानि—

(क) तीर्थोदकानि समिधः कुसुमानि दर्भान्
स्वैरं वनादुपनयन्तु तपोवनानि।
धर्मप्रिया नृपसुता न हि धर्मपीडा—
मिच्छेत् तपस्विषु कुलव्रतमेतदस्याः॥

(ख) विस्रब्धं हरिणाश्चरन्त्यचकिता देशागतप्रत्यया
वृक्षाः पुष्पफलैः समृद्धविटपाः सर्वे दयारक्षिताः ।
भूयिष्ठं कपिलानि गोकुलधनान्यक्षेत्रवत्यो दिशो
निःसन्दिग्धमिदं तपोवनमयं धूमो हि बह्वाश्रयः ॥

(ग) दुःखं त्यक्तुं बद्धमूलोऽनुरागः
स्मृत्वा स्मृत्वा याति दुःखं नवत्वम् ।
यात्रा त्वेषा यद् विमुच्येह बाष्पं
प्राप्तानृण्या याति बुद्धिः प्रसादम् ॥

(घ) यदि तावदयं स्वप्नो, धन्यमप्रतिबोधनम् ।
अथायं विभ्रमो वा स्याद्, विभ्रमो ह्यस्तु मे चिरम् ॥

२. अधोलिखितेषु द्वयोर्विषये टिप्पण्यौ लेख्ये :—
(क) स्थापना, (ख) प्रवेशकः, (ग) भरतवाक्यम् ।

३. अधस्तनेषु विषयेषु कमप्येकविषयमवलम्ब्य शुद्धसंस्कृतगिरा निबन्धो लेख्यः—
(क) या विद्या सा मुक्तये । (ख) मम प्रियपुस्तकम् ।
(ग) भारते संस्कृतस्य स्थानम् । (घ) विज्ञानस्य लाभा दुष्परिणामाश्च ।

४. एतेषु पञ्चवाक्यानि शोधनीयानि :—
(क) प्राते भ्रमणं लाभदायकम् । (ख) दधिना सर्वे जनास्तृप्यन्ति ।
(ग) आनय मे प्रियं सखिम् । (घ) मया चन्द्रः पश्यते ।
(ङ) मृतभर्त्ता इयं नारी । (च) सिंहा हरिणान् निहन्ति ।
(छ) प्रनश्यति यशो दुराचारस्य ।

५. अग्रेलिखितयोर्द्वयोर्हिन्दीवाक्यकदम्बकयोरेकतरं संस्कृतगिराऽनूद्यताम्—
(क) बुरों का साथ छोड़ और भलों की संगति कर । पढ़ाई में आलस न कर, अवश्यमेव परीक्षा में पास होगा । गरीबों पर दया कर, भगवान् मदद करेंगे । उस भीषण दृश्य को देखकर उसके हाथ-पैर काँपने लगे । उनका कोई दोष न होने पर भी उन पर सन्देह बना ही रहा । राम ! बाजार जाओ, झटपट पचपन आम खरीद कर लौट आओ । यदि वह तैरना जानता, तो पानी से न डरता ।

उसने पेड़ पर चढ़कर खुशबूदार फूलों से लदी हुई एक छोटी-सी टहनी को तोड़ दिया। दुश्मन की सारी फौज इस तरह से हरा दी गयी, उनके दो हजार सिपाही मार दिये गये और सात सौ से भी अधिक पकड़ लिये गये।

(ख) एक समय राजा दिलीप ने अश्वमेध यज्ञ करने के लिए एक घोड़ा छोड़ा। उसकी रक्षा का भार रघु पर छोड़ा। वह घोड़े के पीछे पीछे चला। इन्द्र ने इस डर से कि 'सौ यज्ञ करके दिलीप मेरा पद लेगा' छिप कर उस घोड़े को चुरा लिया। नन्दिनी की कृपा से रघु को यह बात विदित हुई और पहले उसने साम-नीति के अनुसार देवेन्द्र से वह घोड़ा माँगा। घोड़ा न मिलने पर रघु ने देवेन्द्र के साथ युद्ध आरम्भ किया। उनके बीच युद्ध होने पर रघु ने ही पहले देवेन्द्र के हृदय पर बाण मारा।

## उत्तराणि

१. (क) द्रष्टव्यम्, पृ० २४। (ख) द्रष्टव्यम्, पृ० ३०।
(ग) द्रष्टव्यम्, पृ० ४१। (घ) द्रष्टव्यम्, पृ० ५४।

२. (क) स्थापना—द्रष्टव्यम्, पृ० ६।
(ख) प्रवेशकः—द्रष्टव्यम्, पृ० ७।
(ग) भरतवाक्यम्—द्रष्टव्यम्, पृ० ७।

३. (क) द्रष्टव्यम्, पृ० ११६–११७। (ख) द्रष्टव्यम्, पृ० १४५–१४६।
(ग) द्रष्टव्यम्, पृ० १०५–१०६। (घ) द्रष्टव्यम्, पृ० १२९–१३०।

४. (क) प्रातर्भ्रमणं लाभदायकम्। (ख) दध्ना सर्वे जनास्तृप्यन्ति।
(ग) आनय मम प्रियं सखायम्। (घ) मया चन्द्रो दृश्यते।
(ङ) मृतभर्त्तेयं नारी। (च) सिंहाः हरिणान् निघ्नन्ति।
(छ) प्रणश्यति यशो दुराचारस्य।

५. (क) दुर्जनानां सङ्गं त्यज, सज्जनानां च सङ्गं कुरु। अध्ययने प्रमादं न कुरु, अवश्यमेव परीक्षायामुत्तीर्णो भविष्यसि। निर्धनेषु दयां कुरु, ईश्वरः साहाय्यं करिष्यति। तद् भीषणं दृश्यमवलोक्य तस्य हस्त-पादाः कम्पितुमारभन्त। तेषां दोषासत्त्वेऽपि तेषु सन्देह एव प्रतीयते स्म। राम! आपणं गच्छ तत्कालं पञ्चपञ्चाशत् आम्राणि क्रीत्वा प्रत्यावर्तितो भव। यदि सः तरणमज्ञास्यत् तर्हि जलान्ना-ऽभेष्यत्। स वृक्षमारुह्य सुगन्धितपुष्पैरावृतामेकां प्रशाखिकां त्रोटयामास। शत्रोः सम्पूर्णा चमूरेवं पराजिता, तस्याः द्विसहस्रमिता सैनिकाः हताः, सप्तशतेभ्योऽप्यधिकाः गृहीताः।

(ख) एकदा राजा दिलीपोऽश्वमेधयज्ञकरणार्थमेकमश्वं तत्याज, तद्रक्षाभारं रघौ निक्षिप्तवान्। सोऽश्वमनुजगाम। 'शतं यज्ञान् विधाय दिलीपो मत्पदं ग्रहीष्यति' इति भयाद् देवेन्द्रो गुप्तीभूय तमश्वं चोरयामास। नन्दिनीकृपया तथ्यमिदं रघुर्ज्ञातवान्। सर्वप्रथमञ्च सः सामनीत्यनुसारेण देवेन्द्रात् तमश्वं ययाचे। अश्वाप्राप्तौ सत्यां रघुर्देवेन्द्रेण सह युद्धं कर्तुमारेभे। तयोर्मध्ये युद्धे प्रचलिते सति रघुरेव सर्वप्रथमं देवेन्द्रहृदये सायकेन प्रहारं चकार।

—:०:—

## प्रश्नपत्रम्

## उत्तरमध्यमा (द्वितीय वर्ष) परीक्षा, १९८२

### प्रथम पत्रम्

### अनिवार्यसंस्कृतसाहित्ये

१. अधोलिखितेषु कानिचित् त्रीणि पद्यानि सप्रसङ्गं व्याख्येयानि—

(क) उदयनवेन्दुसवर्णावासवदत्तावलौ बलस्य त्वाम्।
पद्मावतीर्णपूर्णौ वसन्तकम्रौ भुजौ पाताम्॥

(ख) अनाहारे तुल्यः प्रततरुदितक्षामवदनः
शरीरे संस्कारं नृपतिसमदुःखं परिवहन् ।
दिवा वा रात्रौ वा परिचरति यत्नैर्नरपतिं
नृपः प्राणान् सद्यस्त्यजति यदि तस्याऽप्युपरमः ।।

(ग) कामेनोज्जयिनीं गते मयि तदा कामप्यवस्थां गते
दृष्ट्वा स्वैरमवन्तिराजतनयां पञ्चेषवः पातिताः ।
तैरद्यापि सशल्यमेव हृदयं भूयश्च विद्धा वयं
पञ्चेषुर्मदनो यदा कथमयं षष्ठः शरः पातितः ॥

(घ) शय्या नावनता तथास्तृतसमा न व्याकुलप्रच्छदा
न क्लिष्टं हि शिरोपधानममलं शीर्षाभिघातौषधैः ।
रोगे दृष्टिविलोभनं जनयितुं शोभा न काचित् कृता
प्राणी प्राप्य रुजा पुनर्न शयनं शीघ्रं स्वयं मुञ्चति ।।

२. अधोनिर्दिष्टेषु कयोश्चिद् द्वयोरेव प्रसङ्गनिर्देशपूर्वकं भावार्थाः प्रकाशनीयाः—
(क) चक्रारपङ्क्तिरिव गच्छति भाग्यपङ्क्तिः ।
(ख) सर्वं दुःखं न्यासस्य रक्षणम् ।
(ग) प्राप्ताऽऽतृष्णा याति बुद्धिः प्रसादम् ।
(घ) स्त्रीस्वभावस्तु कातरः ।

३. एतेष्वेकं विषयमवलम्ब्य पञ्चविंशतिपंक्तितोऽन्यूनः संस्कृतनिबन्धो लेख्यः—
(क) विद्याविहीनः पशुः । (ख) वाराणसीवर्णनम् । (ग) सत्सङ्गतिः ।
(घ) जननी जन्मभूमिश्च स्वर्गादपि गरीयसी ।

४. अधस्तनेषु कानिचित् पञ्च वाक्यानि शोधनीयानि—
(क) अनेन पापेन निवारयति । (ख) बालकं पुस्तकं रोचते ।
(ग) जनकं नमः । (घ) सुखात् वहति ।
(ङ) अलं हसितस्य । (च) त्वं नृपस्य सेवसे ।
(छ) भवान् आगच्छसि । (ज) विद्या सत्यात् शोभसे ।

५. अधोलिखितयोः कश्चिदेकोऽनुच्छेदः संस्कृतेऽनूद्यताम्—

( क ) एक सिंहशावक वन में अकेला खेल रहा था। उसकी माँ वेसुध सोयी थी। जंगल के नये पदार्थों ने सिंहशावक का मन आकर्षित किया। उसकी इच्छा हुई कि वह संसार के सब पदार्थों को देखे। घमता हुआ वह बहुत दूर पहुंच गया और रास्ता भूल गया। उसने, अपनी माँ को पुकारा। लेकिन वह कहीं दिखाई न पड़ी।

( ख ) गाधिपुत्र महामुनि विश्वामित्र जन्म से क्षत्रिय थे, किन्तु अपनी तपस्या साधना से गुण-कर्म अनुसार ब्राह्मण बन गये थे। ये तपोवन में बसते थे। अपने आश्रम में जब ये जप और यज्ञ करते थे तब मारीच सुबाहु से डरते थे। श्रीरामचन्द्रजी का यश सुनकर यज्ञरक्षार्थ राम को बुलाने हेतु ये अयोध्या आते थे।

## उत्तराणि

१. (क) द्रष्टव्यम्, पृ० १९। (ख) द्रष्टव्यम्, पृ० ३३।
(ग) द्रष्टव्यम्, पृ० ३६। (घ) द्रष्टव्यम्, पृ० ४८।

२. (क) चक्रारपङ्क्तिरिव गच्छति भाग्यपङ्क्तिः।

सन्दर्भः प्रसङ्गनिर्देशश्च—महाकविश्रीभासप्रणीतस्य 'स्वप्नवासवदत्त' नाटकस्य प्रथमाङ्कादुद्धृते पद्यांशेऽस्मिन् कविर्मगधराजस्य सेवकवर्गद्वारा तपस्विजनानामुत्सारणसमये यौगन्धरायणवासवदत्तयोर्वार्तालापं वर्णयति। वासवदत्तायाः 'आर्य! परिश्रमः तथा खेदं नोत्पादयति यथाऽयमुत्सारणाख्यस्तिरस्कार' इति वचनं श्रुत्वा यौगन्धरायणोऽत्र वासवदत्तां समाश्वासयति यदुत्सारणया न खेदो विधेयः। यतो हि चक्रपंक्तिरिव भाग्यस्य नियमः परिवर्तनशीलो भवतीति।

भावार्थः—यौगन्धरायणः वासवदत्तां समाश्वासयन्नाह—समयक्रमेण परिभ्रममाणा भाग्यपरम्परा रथाङ्गस्य पङ्क्तिरिव गच्छति। यथा चक्रगतान्यराणि क्रमेणोपर्यधो दृश्यन्ते, तथा शुभान्यशुभानि च जनस्य भागधेयान्यपि समयगत्यनुसारं विपरिवर्तन्त एवेत्यद्य समयमहिमोद्भवं क्लेशमनुभवन्त्यापि समयगतिं प्रतीक्षमाणया त्वया न मनः खेदनीयमिति भावः।

(ख) सर्वं दुःखं न्यासस्य रक्षणम् ।

सन्दर्भः प्रसङ्गनिर्देशश्च—महाकविश्रीभासप्रणीतस्य 'स्वप्नवासवदत्त' नाटकस्य प्रथमाङ्कादुद्धृते पद्यांशेऽस्मिन् यौगन्धरायणस्य स्वेच्छां श्रुत्वा काञ्चुकीयः कथयति—देवि, महती खल्वस्याभ्यर्थना, कथं स्वीकुर्मः । न्यासरक्षणस्य अर्थादिदानापेक्षया कष्टसाध्यत्वात् ।

भावार्थः—सर्वमन्यत् कार्यान्तरं सुकरं स्यात्, अर्थात्—अर्थप्रभृतीनां समस्तानां वस्तूनां वितरणं तावल्लोके सुकरम्, परं निक्षेपरक्षणं नाम स्वस्मिन्नुत्तरदायित्वेन सर्वथा दुष्करे कर्मणि कथमिदानीं प्रवर्तितव्यमस्माभिरिति काञ्चुकीयवचसोऽभिप्रायः ।

(ग) प्राप्ताऽऽनृण्या याति बुद्धिः प्रसादम् ।

सन्दर्भः प्रसङ्गनिर्देशश्च—महाकविश्रीभासप्रणीतस्य 'स्वप्नवासवदत्त' नाटकस्य चतुर्थाङ्कादुद्धृते पद्यांशेऽस्मिन् कविर्वर्णयति यद् विदूषकस्य 'धारयतु धारयतु भवान् अनतिक्रमणीयोऽयं विधिः ईदृशमिदानीमेतत्' इति वचनमाकर्ण्य विषादभावं नाटयन् राजा कथयति—मित्र न भवान् जानाति ममावस्थाम् । न ज्ञायते मित्र ! कष्टकरी विरहावस्था मे भवता, अत एतादृशमुपदिश्यते कुत इति कष्टकारणत्वं विवेचितमत्र ।

भावार्थः—राजा उदयनः कथयति यत् महीयान् खलु वासवदत्ताप्रणयमहिमा । विरहे च तत्स्मरणं मुहुर्दुःखमुद्बोधयति । रोदनेन हि दुःखभारो लघूभवतीति तदानीं रोदनमेव मनसश्चाञ्चाञ्चल्यं नूनं स्थिरीकरणोपायः । अश्रुपाते सति वियोगदशामवसन्नं मनः पर्याकुलं कथमपि प्रसन्नतामधिगच्छतीति भावः ।

(घ) स्त्रीस्वभावस्तु कातरः ।

सन्दर्भः प्रसङ्गनिर्देशश्च—महाकविश्रीभासप्रणीतस्य 'स्वप्नवासवदत्त' नाटकस्य चतुर्थाङ्कादुद्धृते पद्यांशेऽस्मिन् राजा पद्मावतीसमक्षं स्वीयाश्रुपातस्य कारणान्तरमन्यथा निर्दिश्य वस्तुस्थितिं गोपयन्

सत्यगोपनमन्यथाशङ्कनपरिहाराय प्रयुक्तं नवोढां पद्मावतीं प्रत्येतद् गुणायेति पुनस्तस्यौचित्यं समर्थयति ।

भावार्थः—राजा मनसा चिन्तयति यत् 'मदीयाश्रुपातस्य प्रियतम-वासवदत्ता वियोगहेतुतायामाकर्णितायां नवोढ्या मुग्धया पद्मावत्या भृशं व्यथितचित्तया भूयेत । यद्यपि धीरयाऽनया सत्यकारणश्रवणेऽपि सापत्न्यसहजमीर्ष्याभावं भजन्त्या विकृतचित्तया न भवितुं शक्यते, तथापि स्वभावतया स्त्रियोऽधीराः भवन्तीति तादृशी शङ्का युज्यतेऽस्यां कर्तुम् । चञ्चलं मनः सर्वेषां विशेषतस्तु बालानाम्, तेन सा किन्नाम कदाचिन्न चिन्तयेत् । अतो मृषा तत्कारणं प्रदर्शयता युक्तमेवाऽऽचरितं मये'ति भावः ।

३. ( क ) द्रष्टव्यम्, पृ० ११७–११८ । ( ख ) द्रष्टव्यम्, पृ० १११–११२ ।
( ग ) ,, ,, १३१–१३२ । ( घ ) ,, ,, १३३–१३४ ।

४. ( क ) अनेन पापं निवारयति । ( ख ) बालकाय पुस्तकं रोचते ।
( ग ) जनकाय नमः । ( घ ) सुखेन वहति ।
( ङ ) अलं हसितेन । ( च ) त्वं नृपं सेवसे ।
( छ ) भवान् आगच्छति । ( ज ) विद्या सत्येन शोभते ।

५. ( क ) एकः सिंहशावको वने एकाकी क्रीडति स्म । तस्य माता विचेतना सुप्ताऽऽसीत् । वनस्य नवीनाः पदार्थाः सिंहशावकस्य मनः आकृष्टं चक्रुः । तस्येच्छा जाता यत् सः संसारस्य सर्वानपि पदार्थान् पश्येत् । भ्राम्यन् सोऽतिदूरं प्राप्तः, मार्गञ्च विस्मृतवान् । स स्वमातरमाकारितवान् । किन्तु सा न कुत्रचिदपि दृष्टा ।

( ख ) गाधिपुत्रो महामुनिर्विश्वामित्रो जन्मना क्षत्रिय आसीत्, किन्तु स्वीयतपस्यया, साधनया च गुणकर्मानुसारं ब्राह्मणः संवृत्तः । सः तपोवने वसति स्म । स्वीये आश्रमे यदाऽयं जपं यज्ञं च करोति स्म, तदा सः मारीचसुबाहुभ्यां बिभेति स्म । श्रीरामचन्द्रस्य यशः श्रुत्वा यज्ञरक्षार्थं राममाह्वातुं स अयोध्यामागच्छति स्म ।

प्रश्नपत्रम्

१९८३

# उत्तरमध्यमपरीक्षायाम्

## अनिवार्यसंस्कृतकाव्यविषये

### द्वितीयवर्षे प्रथमपत्रम्

[ नाटकनिबन्धव्युत्पत्त्यनुवादेषु प्रश्नाः ]

१. अधोलिखितेषु कानिचिद् त्रीणि पद्यानि सप्रसङ्गं व्याख्येयानि—

(क) खगा वासोपेताः सलिलमवगाढो मुनिजनः
प्रदीप्तोऽग्निर्भाति प्रविचरति धूमो मुनिवनम् ।
परिभ्रष्टो दूराद् रविरपि च संक्षिप्तकिरणो
रथं व्यावर्त्यासौ प्रविशति शनैरस्तशिखरम् ॥

(ख) ऋज्वायतां च विरलां च नवोन्नतां च
सप्तर्षिवंशकुटिलां च निवर्तनेषु ।
निर्मुच्यमानभुजगोदरनिर्मलस्य
सीमामिवाम्बरतलस्य विभज्यमानाम् ॥

(ग) स्मराम्यवन्त्याधिपतेः सुतायाः
प्रस्थानकाले स्वजनं स्मरन्त्याः ।
वाष्पं प्रवृत्तं नयनान्तलग्नं
स्नेहान्ममैवोरसि पातयन्त्याः ॥

(घ) प्रच्छाद्य राजमहिषीं नृपतेर्हितार्थं
कामं मया कृतमिदं हितमित्यवेक्ष्य ।
सिद्धेऽपि नाम मम कर्मणि पार्थिवोऽसौ
किं वक्ष्यतीति हृदयं परिशङ्कितं मे ॥

२. अधोनिर्दिष्टेषु कयोश्चिद् द्वयोरेव प्रसङ्गनिर्देशपूर्वकं भावार्थाः प्रकाशनीयाः—

(क) प्रायेण हि नरेन्द्रश्रीः सोत्साहैरेव भुज्यते ।

(ख) परस्परगता लोके दृश्यते रूपतुल्यता ।

(ग) सिद्धवाक्यान्युत्क्रम्य गच्छति विधिः सुपरीक्षितानि ।

(घ) तस्मिन् सर्वमधीनं हि यत्राधीनो नराधिपः ।

(ङ) दुःखं न्यासस्य रक्षणम् ।

३. एषु कमप्येकं विषयमवलम्ब्य संस्कृतभाषायां रुचिरो निबन्धो विरचनीयः—

(क) लोभः पापस्य कारणम् ।
(ख) सदाचारोपदेशः ।
(ग) वाराणसी ।
(घ) परोपकारः ।
(ङ) संस्कृतभाषायाः महत्त्वम् ।

४. हेतुनिरूपणपूर्वकमेषु कयोश्चिद् द्वयोर्वाक्ययोरशुद्धिसंशोधनं क्रियताम्—

(क) ते गमनं न रोचते गोः पयो दोग्धि ।

(ख) सो वीणां वादयति ।

(ग) त्रिभ्यो दिनेभ्यः पठति ।

(घ) सः सिंहासनेऽधितिष्ठति ।

(ङ) गुरुं प्रार्थयित्वा गृहं गच्छत ।

५. अग्रेलिखितयोर्द्वयोर्हिन्दीवाक्यकदम्बकयोरेकतरं संस्कृतगिराऽनूद्यताम्—

(क) भारत देश की सुविस्तृत उत्तर दिशा में स्थित पर्वत लोगों द्वारा पर्वतराज हिमालय नाम से पुकारा जाता है। इसकी अत्यन्त ऊँची चोटियाँ विश्व के सभी पर्वतों को जीतती हैं। इसलिये इसे पर्वतराज कहा जाता है। ऊँची चोटियाँ सदैव वर्फ से ढकी रहती हैं, इसलिये 'हिमालय' और 'हिमगिरि' कहा जाता है। एवरेस्ट, गौरीशंकर आदि इसकी वहुतसी चोटियाँ संसार में सवसे ऊँची चोटियाँ हे।

(ख) प्राचीनकाल में वत्स नामक एक सम्पन्न राज्य था। इसकी राजधानी कौशाम्बी यहाँ से अधिक दूर नहीं थी। इस राज्य का शासक महाराज उदयन था। वह वीर, अनुपम सुन्दर तथा कालममंश था।

प्रियदर्शी अशोक ने कौशाम्बी में ही अपना शिलालेख लिखवाया था। वह इस समय कौशाम्बी से लाकर प्रयाग के किले में सुरक्षित है।

## उत्तराणि

१. (क) द्रष्टव्यम्, पृ० ३४।        (ख) द्रष्टव्यम्, पृ० ३७।

(ग) द्रष्टव्यम्, पृ० ५०।        (घ) द्रष्टव्यम्, पृ० ७४।

२ (क) प्रायेण हि नरेन्द्रश्रीः सोत्साहैरेव भुज्यते।

सन्दर्भः प्रसङ्गनिर्देशश्च—महाकविश्रीभासप्रणीतस्य 'स्वप्नवासवदत्त' नाटकस्य षष्ठाङ्कादुद्धृते पद्यांशेऽस्मिन् काञ्चुकीयो महासेनसन्देशं राजानमुदयनं श्रावयति।

भावार्थः—वत्सराजस्योदयनस्याऽपहृतराजस्य पुनरवाप्तौ हर्षं प्रकटयन् महासेनो वत्सराजं सन्दिष्टवान् यत् शत्रून् पराभूय स्वपराक्रमेण शत्रुभिरपहृतराज्यं भवान् पुनः प्राप्तवांस्तदर्थं भवान् भूयोभूयोऽभिनन्दनीयः। यतो हि प्राय उत्साहसम्पन्ना एव जना राज्यश्रियमुपभोक्तुमर्हन्ति।

(ख) परस्परगता लोके दृश्यते रूपतुल्यता।

सन्दर्भः प्रसङ्गनिर्देशश्च—महाकविश्रीभासप्रणीतस्य 'स्वप्नवासवदत्त' नाटकस्य षष्ठाङ्कादुद्धृते पद्यांशेऽस्मिन् वत्सराजः पूर्वं वासवदत्ता धात्र्या दर्शितं चित्रफलकं दृष्ट्वा पद्मावत्याः सन्निधौ उच्यमानामावन्तिकां वासवदत्तासदृशीं शङ्कमानः 'आर्यपुत्र! मम कन्याभावे केनापि ब्राह्मणेन मम भगिनिकेति न्यासो निक्षिप्तः। प्रोषितभर्तृका परपुरुषदर्शनं परिहरति। तदार्यां मया सहागतां दृष्ट्वा जानात्वार्यपुत्रः' इति पद्मावतीवचो निशम्य ब्राह्मणभगिनीत्वात्तत्र वासवदत्तासादृश्यमसम्भवं मन्यमानो ब्रवीति।

भावार्थः—राजा कथयति यत्—यदि सा ब्राह्मणस्य भगिनी वर्तते तर्हि सा निश्चितरूपेण वासवदत्ता नास्ति। केवलं रूपसादृश्याधारेण

सैव वासवदत्तेति निर्धारयितुं न शक्यते। यतो हि संसारेऽस्मिन् बहुत्र परस्परं स्वरूपसादृश्यं प्रत्यक्षमनुभूयते।

(ग) सिद्धवाक्यान्युत्क्रम्य गच्छति विधिः सुपरीक्षितानि।

सन्दर्भः प्रसङ्गनिर्देशश्च—महाकविश्रीभासप्रणीतस्य 'स्वप्नवासवदत्त' नाटकस्य प्रथमाङ्कादुद्धृते पद्यांशेऽस्मिन् पद्मावत्या आवन्तिकापरिपालनस्वीकारानन्तरं हर्षितः सन्नात्मगतं स्वोक्तौ यौगन्धरायणो विश्वसिति यत् साम्राज्यलाभे आवन्तिकायाः पद्मावतीसकाशे न्यासरूपेण स्थापनं सहायकमेव, पुनश्च साम्राज्यलाभानन्तरं वत्सराजायोदयनाय आवन्तिकासमर्पणकाले तच्चारित्र्यविषये मगधराजपुत्री साक्षिणी भविष्यति, यतो हि पद्मावती उदयनस्य पत्नी भविष्यतीति सिद्धैः पूर्वमेवोक्तम्।

भावार्थः—यौगन्धरायणः सहर्षमात्मगतं ब्रवीति यत् पुष्पकभद्रादिभिः सिद्धपुरुषैः पूर्वमेवोक्तम् यत् मगधराजपुत्री पद्मावती वत्सराजस्योदयनस्य कृताभिषेका पत्नी भविष्यति। तेषु विश्वासकरणाद्देवाऽस्माभिः आवन्तिकायाः वासवदत्तायाः पद्मावत्याः हस्ते निक्षेपरूपं कार्यं विहितम्, यतो हि सम्यक् परीक्षितानि सिद्धपुरुषाणां वाक्यान्युल्लङ्घ्य भागधेयं न यातीति भावः।

(घ) तस्मिन् सर्वमधीनं हि यत्राधीनो नराधिपः।

सन्दर्भः प्रसङ्गनिर्देशश्च—महाकविश्रीभासप्रणीतस्य 'स्वप्नवासवदत्त' नाटकस्य प्रथमाङ्कादुद्धृते पद्यांशेऽस्मिन् रुमण्वतः कार्यं राज्ञः परिचर्यां ब्रह्मचारिमुखाच्छ्रुत्वा यौगन्धरायण आत्मगतं कथयति।

भावार्थः—यौगन्धरायणः कथयति यत् मन्त्रिणो रुमण्वतस्तु वत्सराजपरिचर्यारूपपरिश्रमः सर्वथा प्रशंसनीयः। यतो हि राज्ञ उदयनस्य जीवनभारं यो वहति सः वस्तुतः समस्तमप्यस्य कार्यजातस्य भारं वहतीति भावः।

(ङ) दुःखं न्यासस्य रक्षणम्।

द्रष्टव्यम्, पृ० १६५।

३. (क) द्रष्टव्यम्, पृ० १३४–१३५। (ख) द्रष्टव्यम्, पृ० १३६–१३७।
(ग) द्रष्टव्यम्, पृ० १११–११२। (घ) द्रष्टव्यम्, पृ० १३८–१४०।
(ङ) द्रष्टव्यम्, पृ० १०३–१०४।

४. (क) ते गमनं न रोचते।

'अनुदात्तं सर्वमपादादौ' इति सूत्रस्याधिकारान्तर्गतेन 'तेमयावेकवचनस्य' इति सूत्रेण अपादादौ 'तव' इत्यस्य 'ते' इत्यादेशो भवति। अतः 'तव गमनं रोचते' इत्येव वाक्यं साधु।

गोः पयो दोग्धि—

अत्र 'अकथितं च' इति पाणिनीयसूत्रेण—

'दुहियाचिरुधिप्रच्छिभिक्षिचिञा-
मुपयोगनिमित्तमपूर्वविधौ।
ब्रुविशासिगुणेन च यत् सचते
तदकीर्तितमाचरितं कविना॥'

इति परिगणनानुसारं कर्मसंज्ञायां गो शब्दात् कर्मणि द्वितीया विभक्तिर्भवति। अतो 'गां दोग्धि पयः' इत्येव वाक्यं साधु।

(ख) सो वीणां वादयति।

अत्र 'एतत्तदोः सुलोपोऽकोरनञ्समासे हलि' इति सूत्रेण तद्शब्दात् पुंल्लिङ्गात् परस्य सोर्लुकि सति 'स वीणां वादयति' इत्येव वाक्यं साधु भवति।

(ग) त्रिभ्यो दिनेभ्यः पठति।

अत्र 'कालाध्वनोरत्यन्तसंयोगे' इति सूत्रेण द्वितीयाप्राप्तिः अपवर्गे द्योत्ये तृतीया प्राप्तिः। अपवर्गाभावादत्र न तृतीया, किन्तु द्वितीयैव। अतः 'त्रीणि दिनानि पठति' इत्येव वाक्यं साधु।

(घ) सः सिंहासनेऽधितिष्ठति ।

अत्र 'अधिशीङ्स्थासां कर्म' इति सूत्रेण अधिपूर्वकस्थाधातोः प्रयोगे आधारस्य 'सिंहासन' शब्दस्य कर्मसंज्ञायां, तस्माद् द्वितीयाविभक्तिः । अतः 'सः सिंहासनमधितिष्ठति' इत्येव वाक्यं साधु ।

(ङ) गुरुं प्रार्थयित्वा गृहं गच्छत ।

अत्र 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' इति सूत्रेण क्त्वाप्रत्ययस्य ल्यबादेशः । अतः 'गुरुं प्रार्थ्य गृहं गच्छत' इत्येव वाक्यं साधु ।

५. (क) भारतदेशस्य सुविस्तृतायामुत्तरस्यां दिशि स्थितः पर्वतो जनैः 'पर्वतराजहिमालय' नाम्नाऽभिधीयते । अस्त्यात्यन्तमुच्चाशिशखरा विश्वस्य सर्वानपि पर्वतानतिशेरते । अत एवाऽयम् 'पर्वतराज' इत्युच्यते । उच्चाः शिखराः सदैव हिमैराच्छादिताः भवन्ति, अत एव हिमालयः 'हिमगिरि'रित्यभिधीयते । एवरेस्ट, गौरीशंकर प्रभृतयोऽस्याऽनेके शिखराः संसारेऽस्मिन् सर्वेषूच्चाः शिखरास्सन्ति ।

(ख) प्राचीनकाले 'वत्स' नामकमेकं सम्पन्नं राज्यमासीत् । अस्य राजधानी कौशाम्बी इतो नातिदूरे स्थिता आसीत् । राज्यस्याऽस्य शासको महाराज उदयन आसीत् । स वीरोऽनुपमसुन्दरकलाममंज्ञश्चाऽऽसीत् । प्रियदर्शिनाऽशोकेन कौशाम्ब्यामेव स्वकीयः शिलालेखो लेखितः । असावस्मिन् समये कौशाम्बीत आनीय प्रयागस्य दुर्गे सुरक्षितं स्थापितः ।

—:o:—

# चौखम्बा अमरभारती प्रकाशन के परीक्षोपयोगी ग्रन्थ



**रघुवंशमहाकाव्यम्** । मल्लिनाथ कृत-सञ्जीवनी टीका विभूषित सान्वय "इन्दुकला" संस्कृत-हिन्दी व्याख्या, समास, विग्रह, कोष सहित । व्याख्याकार—पं० वैद्यनाथ झा । प्रथम सर्ग ३-
द्वितीय सर्ग ३—०० तृतीय सर्ग ४—०० षष्ठ सप्तम सर्ग ६—०

**नीतिशतकम्** । सान्वय सटिप्पण 'मनोरमा' संस्कृत हिन्दी व्याख्या विभूषित । डा० ओमप्रकाश पाण्डेय । ६—००

**मुद्राराक्षस नाटकम्** । विशाखदत्त । भावबोधिनी संस्कृत-हिन्दी व्याख्योपेतम् । व्याख्याकार श्री पं० कनकलाल ठक्कुर, भूमिका लेखक आचार्य शेषराज शर्मा रेग्मी १६—००

**तर्कसंग्रह** । सपदकृत्य 'इन्दुश्री' हिन्दी व्याख्योपेतः तर्कसंग्रहप्रश्नोत्तरी संहितश्च, व्याख्याकार श्रीहरेकान्त मिश्र साहित्याचार्य ३—००

**विक्रमाङ्कदेव चरितम्** । सटिप्पण 'चन्द्रकला' संस्कृत-हिन्दी व्याख्योपेतम् । व्या० आचार्य श्रीशेषराज शर्मा रेग्मी । प्रथम सर्ग ६—००

**अमरकोष** । प्रथम काण्ड । सटिप्पण 'रुचिरा' हिन्दी व्याख्योपेतः । व्या० डॉ० सुधाकर मालवीय ३—५०

**स्वप्नवासवदत्तम्** । भासकृतम् । पं० अनन्तरामशास्त्री वेतालकृत 'प्रबोधिनी' सं० तथा पं० जगन्नाथ शास्त्री होशिंग कृत 'प्रकाश' हिन्दी टीकासहित भूमिका लेखक-प्रो० कान्तानाथ शास्त्री तेलङ्ग १२—००

**उत्तररामचरितम्** । 'चन्द्रकला'-विद्योतिनी' संस्कृत-हिन्दीटीकासहित २०—००
षष्ठ अङ्क ५—००

**नाट्यशास्त्रम्** । 'मयूख' हिन्दी व्याख्या सहित । १—२ अध्याय १—००

**रत्नावलीनाटकम्** । 'प्रकाश' सं. हि. टीकासहित । आ. रामचन्द्रमिश्र ६—००

**रसगङ्गाधररहस्यम्** । ( प्रश्नोत्तरी ) पं० श्री मदनमोहन झा ५—००

**तर्कभाषारहस्यम्** । ( तर्कभाषा-प्रश्नोत्तरी ) २—००

**मध्यकौमुदीरहस्यम्** । ( प्रश्नोत्तरी ) पं० रामचन्द्र झा १०—००

**मध्यमव्यायोगरहस्यम्** ( मध्यमव्यायोग-प्रश्नोत्तरी ) सं० पं० अशोक चन्द्र गौड़ शास्त्री ६—००

**कर्णभारम्** । 'वीणा-लक्ष्मी' संस्कृत-हिन्दी टीका सहिता । पं० अशोक चन्द्र गौड़ शास्त्री ५—०

---

प्राप्तिस्थान—चौखम्बा संस्कृत पुस्तकालय, कचौड़ीगली, वाराणसी ।